# MANDUKYA RAHASYA VIVRITI

( An open sesame to the Mandukya )

## SOME OPINIONS

1. Very useful to the students of Adwaita Vedanta who follow the modern method as well as the ancient one. Swamiji's Commentary on the Karikas shows the depth of his knowledge in the subject, the clarity of his expression and his lucidity in style.

   — *The Sunday Standard*

2. This is not merely a commentary on the Karikas of Gowdapada. The author covers a much wider ground, taking into account all relevant criticism and discusses threadbare the implications of the Advaita standpoint *vis a vis* the other systems.

   — *The Vedanta Kesari*

3. The Introduction in English and the Bhumika in Sanskrit are both scholarly and valuable.... The language is easy and forcible .... This is a book that requires and deserves careful study. — *The Prabuddha Bharata*

4. It is an erudite and scholarly work explaining the Upanishad and Karika passages fully and thoroughly with appropriate headings, and often criticises views held by others ...The language employed in the commentary is majestic and beautiful and one rarely comes across such writing nowadays. — *The Hindu*

THE

ADHYATMA PRAKASHA KARYALAYA

HOLENARSIPUR ( Hassan Dist. )

अध्यात्मग्रन्थावलिः

# THE MUNDAKA UPANISHAD

WITH

**Sri Shankara's Commentary**

Edited with Notes

*By*

SRI SWAMI SATCHIDANANDENDRA SARASWATI

# मुण्डकोपनिषत्

श्रीशाङ्करभाष्यसंयुता

श्रीसच्चिदानन्देन्द्रसरस्वतीसंयमिभिः

संशोधिता भाष्यटिप्पणेन समलङ्कृता च

क्रमाङ्कः १०४

होळेनरसीपुरे,
अध्यात्मप्रकाशकार्यालये
प्राकाश्यं नीता

शकाब्दाः १८८२

## GENERAL PREFACE

The present edition of Sri Shankaracharya's Upanishad-Bhashyas, is intended for readers who wish to have at a moderate price the plain text of Shankara's works unencumbered by commentaries and sub-commentaries but provided with such aids to study as a beginner is likely to need in appreciating the original.

Every volume of the series has been provided with an introduction, Short Notes on points of special interest, References to parallel passages in the other works of the great Acharya, a Summary of the Upanishad, and an Index.

It is hoped that the systematic division of the text into paragraphs with indication of important various readings, the tracing of quotations to their originals, and the close attention paid to typographical details will all combine to make this edition specially convenient for the earnest reader.

*PUBLISHERS*

# PREFATORY REMARKS.

## The Teaching of the Upanishad

This is the third of the series of small Upanishads edited by me for publication by tl Adhyatma Prakasha Karyalaya.

The special features embodied in its teaching a (1) The dismissal of Karma and Upasana after brief notice as belonging to 'the lower doctrin( (अपरा विद्या) not conducive to immediate releas( (2) The tracing of the entire universe to its origir source, the Indistructible (अक्षरम्) as the First Causel( Cause of all, and hence concluding that the or reality underlying all phenomena, is that eterr Brahman, really free from all attributes ; (3) givi important directions, moral as well as spiritual, such aspirants as desire to intuit that Reality; a finally, (4) showing how this Higher Wisdom enab one to realize one's eternal identity with Brahm in this very life.

## Shankara's Bhashya and the Gloss thereo

Shankara has, in his inimitable style, shown h this teaching is essentially in consonance with that all other main Upanishads. I have attempted amplify his views in my Notes by references to ot Bhashyas of that great teacher, in order to strengt

he conviction of the student as to the uniformity of all Vedantic Revelation.

The Glossator on the Bhashya, generally known as Anandagiri, must be distinguished from his namesake who has explained the Brihadaranyaka or the Sutra Bhashya; for he believes in the doctrine of many souls (नानाजीववादः, *vide* Gloss on Bhashya 1-2-1 of the Upanishad) while the other Anandagiri upholds the doctrine of a Single Individual Soul. Being a recent writer on Vedanta, he has naturally read many a tenet from the later schools of sub-commentaries into the Bhashya, which circumstance has rendered many passages un-intelligible to students of Shankara. It is hoped that the Notes now offered will throw some light upon such intricate parts of the Bhashya.

Among the pandits that have looked through the manuscript and offered usefull suggestions, I should specially mention *Pandita Pravara H. Anantha Murthy Sastrigal and Parakkaje Subrahmanya Bhatta, Vedanta Siromani and Visharada.* My Narayana Smaranams to all these.

Holenarsipur,<br>14-10-1960

EDITOR

# PREFATORY REMARKS.

## The Teaching of the Upanishad

This is the third of the series of smal Upanishads edited by me for publication by t Adhyatma Prakasha Karyalaya.

The special features embodied in its teaching a (1) The dismissal of Karma and Upasana afte brief notice as belonging to ' the lower doctrin (अपरा विद्या) not conducive to immediate releas (2) The tracing of the entire universe to its origi source, the Indistructible (अक्षरम्) as the First Causel Cause of all, and hence concluding that the o reality underlying all phenomena, is that eter Brahman, really free from all attributes ; (3) giv important directions, moral as well as spiritual, such aspirants as desire to intuit that Reality; a finally, (4) showing how this Higher Wisdom enab one to realize one's eternal identity with Brahm in this very life.

## Shankara's Bhashya and the Gloss therec

Shankara has, in his inimitable style, shown h this teaching is essentially in consonance with tha all other main Upanishads. I have attempted amplify his views in my Notes by references to ot Bhashyas of that great teacher, in order to strengt

the conviction of the student as to the uniformity of all Vedantic Revelation.

The Glossator on the Bhashya, generally known as Anandagiri, must be distinguished from his namesake who has explained the Brihadaranyaka or the Sutra Bhashya; for he believes in the doctrine of many souls ( नानाजीववादः, *vide* Gloss on Bhashya 1-2-1 of the Upanishad ) while the other Anandagiri upholds the doctrine of a Single Individual Soul. Being a recent writer on Vedanta, he has naturally read many a tenet from the later schools of sub-commentaries into the Bhashya, which circumstance has rendered many passages un-intelligible to students of Shankara. It is hoped that the Notes now offered will throw some light upon such intricate parts of the Bhashya.

Among the pandits that have looked through the manuscript and offered usefull suggestions, I should specially mention *Pandita Pravara H. Anantha Murthy Sastrigal and Parakkaje Subrahmanya Bhatta, Vedanta Siromani and Visharada.* My Narayana Smaranams to all these.

Holenarsipur,<br>14-10-1960

EDITOR

ಒದೆಂದುಹೇಳುತ್ತಾರೆಯೆ ?– ಎಂಬುದೇ ವಿಚಾರಣೀಯವಾಗಿದೆ. ಈ ಮತವು ಅನುಶಾಂಕರವ್ಯಾಖ್ಯಾನಪ್ರಸ್ಥಾನದವರ ಮತವೆಂಬುದು ಸ್ಪಷ್ಟ. ಆದರೆ ಇದಕ್ಕಿಂತ ವಿಚಿತ್ರವಾಗಿ ತೋರುವದೇನೆಂದರೆ : **'ಮಾಯಾಯಾಂ ಬ್ರಹ್ಮಚೈತನ್ಯಪ್ರತಿಬಿಮ್ಬಾನುಷಙ್ಗತಃ । ಮಹತ್ಕಾಲಪುಮಾಂಸಃ ಸ್ಯುಃ ॥'** (೨–೩೨) ಎಂಬ ವಾಕ್ಯ. **ನಿರೀಶ್ವರವಾದಿಗಳಾದ ಸಾಂಖ್ಯರಿಗೆ ಮಾಯೆಯಲ್ಲಿ ಬ್ರಹ್ಮದ ಪ್ರತಿಬಿಂಬವುಂಟಾಗುವದೆಂದೂ ಮಾಯೆಗೂ ಆ ಪ್ರತಿಬಿಂಬಕ್ಕೂ ಆದ ಸಂಬಂಧದಿಂದ (?) ಮಹತ್ತು, ಕಾಲ, ಪುರುಷರು ಉಂಟಾಗುವರೆಂದೂ ಹೇಳುವ ವ್ಯಾಹತಾಭಿಪ್ರಾಯವು ಹೇಗೆ ಗಂಟ್ಟುಬಿದ್ದಿತು ?** ಈ ಕಗ್ಗಂಟನ್ನು ಬಿಡಿಸುವದು ನಮ್ಮಿಂದಾಗುವಂತಿಲ್ಲ. ಇಲ್ಲಿ (೨–೪೦) ಸಾಂಖ್ಯರ ಇಪ್ಪತ್ತುನಾಲ್ಕು ತತ್ತ್ವಗಳ ವಿವರವೂ ಸಾಂಖ್ಯಮತಾದಿಗಳಲ್ಲಿರುವ ವಿವರಕ್ಕಿಂತ ವಿಲಕ್ಷಣವಾಗಿದೆ.

## ೩. ಜೀವನೂ ಈಶ್ವರನೂ

'ಈಶ್ವರತ್ವವೂ ಜೀವತ್ವವೂ ಸರ್ವಾತ್ಮತ್ವವೂ ಎಂಥದ್ದು ? ಅದನ್ನು ಜೀವನು ಹೇಗೆ ತಿಳಿದುಕೊಳ್ಳುವನು ?' ಎಂಬ ಪ್ರಶ್ನೆಯನ್ನು ಜಿಜ್ಞಾಸುವಾದ ಶಿಷ್ಯನ ಮುಖದಿಂದ ಮಾನಸೋಲ್ಲಾಸಕಾರರು ಹೊರಡಿಸಿರುತ್ತಾರೆ. ಮುಂದೆ 'ಸರ್ವಜ್ಞಃ ಸರ್ವಕರ್ತಾ ಚ ಕಥಮಾತ್ಮಾ ಭವಿಷ್ಯತಿ ? (೧–೭) (ಜೀವಾತ್ಮನು ಸರ್ವಜ್ಞನೂ ಸರ್ವಕರ್ತನೂ ಆದ ಈಶ್ವರನು ಹೇಗಾದಾನು ?) ಎಂಬ ಪ್ರಶ್ನೆಯನ್ನು ಹೊರಡಿಸಿರುತ್ತಾರೆ. ಇದಕ್ಕೆ ಉತ್ತರವಾಗಿ ಬರೆದಿರುವ ವಾಕ್ಯಗಳಲ್ಲಿ ಪರಮಾತ್ಮನ ಒಳಗೇ ಇದ್ದುಕೊಂಡಿರುವ ಜಗತ್ತು ಹೊರಗೆ ಇರುವಂತೆಯೂ ಕನಸಿನಲ್ಲಿ ತನ್ನೊಳಗಿದ್ದ ಪ್ರಪಂಚವು ಹೊರಗೆ ತೋರುವಂತೆಯೂ ಮಾಯೆಯಿಂದ ತೋರುತ್ತಿರುವದು (೨–೪೩, ೪೪) ಎಂಬ ವಾಕ್ಯವಿದೆ. ಅವಿದ್ಯೆಯಿಂದ ಕಲ್ಪಿತವಾಗಿರುವ ನಾಮರೂಪಬೀಜವು ಜಗತ್ತಾಗಿರುತ್ತದೆ– ಎಂಬ ಶಾಂಕರಪ್ರಕ್ರಿಯೆ ಇಲ್ಲಿಲ್ಲ. ಈ ಮಾಯೆ ಹೋಗುವದು ಹೇಗೆ ?–ಎಂಬ ಪ್ರಶ್ನೆಗೆ 'ಅನಾದಿಮಾಯಯಾ ಸುಪ್ತೋ ಯದಾ ಜೀವಃ ಪ್ರಬುಧ್ಯತೇ । ಅಜಮನಿದ್ರಮಸ್ವಪ್ನಮದ್ವೈತಂ ಬುಧ್ಯತೇ ತದಾ ॥' ಎಂಬ (ಗೌ. ಕಾ. ೧–೧೬) ಕಾರಿಕೆಯನ್ನು ಉದಾಹರಿಸಿದೆ. ಆದರೆ ಶ್ರೀಗೌಡಪಾದರ ಮತದಲ್ಲಿರುವಂತೆ ಇಲ್ಲಿ ಜ್ಞಾನದಿಂದ ಅಜ್ಞಾನದ ನಿದ್ರೆಯೂ ಕನಸೂ ಹೋಗುವವೆಂಬ ಪ್ರಕ್ರಿಯೆಯನ್ನೇನೂ ಬೆಳೆಯಿಸಿಲ್ಲ.

ಈಶ್ವರನು ಸರ್ವಜ್ಞನು, ಸರ್ವಶಕ್ತನು– ಎಂಬುದು ಸೂತ್ರಭಾಷ್ಯದಲ್ಲಿರುವ ವಾದ. ಆದರೆ ಅಲ್ಲಿ ಈಶ್ವರನು 'ಸರ್ವಕರ್ತನು' ಎಂಬ ವಿಶೇಷಣವೇನೂ ಕಂಡು ಬರುವದಿಲ್ಲ. ಇಲ್ಲಿಮಾತ್ರ ಈಶ್ವರನ ಜ್ಞಾನಕ್ರಿಯೆಗಳು ಸರ್ವಜೀವರಲ್ಲಿಯೂ ಬಂದುಸೇರಿಕೊಂಡಿವೆಯಾದ್ದರಿಂದ ಆವನೂ ಈಶ್ವರನೇ (೨–೩೧) ಎಂದು ವಾದಿಸಿದೆ.

अव्याचिख्यासितत्वमापद्येत । न चैतदेवमिति मुण्डके प्रतिपादितं विषयमहत्त्वमभि-लक्ष्यैव भगवत्पादानामत्र भाष्यप्रणयने प्रवृत्तिरासीदिति मन्तव्यम् । अल्पाकाराया-मप्यस्यामुपनिषदि हि सर्ववेदान्ततात्पर्यविषयभूता ब्रह्मविद्या साधनफलसहिता अतितरामसाधारण्या प्रक्रियया प्रतिपादिता दृश्यत इति ॥

उपनिषदिति ब्रह्मविद्यैवोच्यते मुख्यवृत्त्या । सा चेयं न केवलं ब्रह्मणा प्रथमजेन प्रोक्तत्वात्, किं तर्हि परब्रह्मविषयत्वादपि 'ब्रह्मविद्या' इत्यन्वर्थनाम्नी । सर्वासामपि विद्यानां स्वोपकारकत्वेनाभिव्यक्तिहेतुत्वात्, सर्वविद्यावेद्यविषयाणां परमार्थस्वरूपभूतस्य ब्रह्मणः प्रतिपादकत्वात् स्वविषयभूते ब्रह्मण्येतस्मिन् विज्ञाते विज्ञेयान्तरानवशेषाच्चेयं 'परा विद्या' इत्यङ्गिरसा व्यपदिष्टाऽत्र । वेदोक्तकर्मोपासना-तत्फलनिदर्शिका तु विद्या 'अपरा विद्या' । तद्विषये विदिते न किञ्चिदपि तत्त्वतो विदितं स्यादिति वस्तुतः सा अविद्यैवेति निश्चित्य तस्या विरक्तः सन् सत्यादिसाधनानि ध्यानयोगं चानुतिष्ठन् परं ब्रह्म विदित्वा, अविद्यादिसंसारहेतुं नितरां नाशयित्वा ब्रह्मैव भवतीति प्रतिपादितमत्र । एतादृशब्रह्मविद्यारूपोपनिष-त्प्रतिपादकत्वाद्ग्रन्थोऽपि 'उपनिषत्' इत्युच्यते भक्त्या । अत एवेमां मुण्डकोपनिषदं व्याचिख्यासितां मन्यते स्म भगवान् भाष्यकारः ॥

## भाष्ये जिज्ञासुभिरवधेया विषयाः

भाष्येऽस्मिन् भगवत्पादीयवेदान्तप्रक्रियाया असाधारण्यांशा अनेके लक्ष्यन्ते । तत्र उपनिषदाधारेणाद्वैतप्रसाधनप्रकारः, कर्मज्ञानस्वभावनिरूपणम्, मुक्तिस्वरूप-निर्धारणम्, ज्ञानसाधनस्थाननिर्देशश्च – इत्येवमेतच्चतुष्टयमत्र विशेषत उल्लेखनीयं भवति ॥

### उपनिषदोऽद्वैतपरत्वम् –

परविद्याविषयभूतं परमार्थतत्त्वमत्रोपनिषदि 'अक्षरम्', 'ब्रह्म', 'पुरुषः', 'आत्मा', 'सत्यम्' – इति च व्यपदिष्टम् । तत्र च अक्षरम् (१-२-१३, ३४)[1] । अक्षरत्वात्, अक्षतत्वात्, अक्षयत्वाच्च ; (२) ब्रह्म (३-१-७, ७१) बृहत्त्वात्, सर्वतो व्याप्तत्वात्, देशकालपरिच्छेदरहितत्वात् ; (३) आत्मा (२-१-४, २-२-७, ४३, ५६) प्रत्यक्चैतन्यस्वरूपेण सर्वस्य हृदयाकाशे नित्यमभिव्यक्तत्वात् ; (४) सत्यं च (२-१-१, ३६) परमार्थसल्लक्षणत्वात् । तदेतादृशात् निरस्तदृश्यत्वग्राह्यत्वादि-सर्वविशेषात् (१-१-६, १५), व्याकृताव्याकृताभ्यां विलक्षणात् (२-१-२, ३७),

1. अत्र प्रथमनिर्दिष्टं सङ्ख्यात्रयं मुण्डकखण्डमन्त्रसूचकम्, अनन्तरनिर्दिष्टा तु भाष्यभागसङ्ख्येति ज्ञेयं सर्वत्र । एकैव सङ्ख्या चेद्भाष्यभागपरामर्शिकैवेति च ॥

सर्वसंसारिधर्मविवर्जितात् (२-१-२, ३८), अक्षरादिशब्दगम्यात् परमार्थसद्वस्तुनः सकाशात् सर्वमव्याकृतप्राणमनोभूतभौतिकादिकं नामरूपाभ्यां व्याकृतं क्रियाकारकफलाश्रयभूतं जगदनृतरूपं (१-१-८, १७) जायते, अपुत्रात्पुरुषादिव स्वप्नदृष्टपुत्रादि (२-१-३, ४०, ४१), तस्मिन्नेव च लीयते । एवं विविधाश्चेतना जीवा अपि दीप्तादग्नेरिव सरूपा विस्फुलिङ्गाः देहादिनामरूपोपाधिभेदमनुविधीयमानास्तत्तदुपाधिभेदप्रभवमनु प्रभवन्ति, तत्तद्विलयमनु विलीयन्ते चेति (२-१-१, ३६) नास्ति यथोपवर्णितादक्षराद्व्यतिरिक्तं चेतनाचेतनप्रविभक्तमिति श्रुतेस्तदक्षरं सर्वदा सर्वथाप्यद्वैतमित्युक्तं भवति । आदावन्ते च यन्नास्ति वर्तमानेऽपि तत्तथा - इति न्यायाज्जायमानस्यापि जगतो मायोपमजन्मत्वात्तेन सद्वितीयत्वानुपपत्तेः ॥

तदेवम्, अक्षरपुरुषापराभिधेयं ब्रह्मैवेदं विश्वमिति (२-१-१०, ४९) अब्रह्मप्रत्ययस्तु सर्वोऽविद्यामात्र (२-२-१२, ६१) इति च सिद्धम् ॥

कर्मज्ञानयोर्विरोधः -

भाष्येऽस्मिन् कर्मज्ञानयोः स्वरूपतो हेतुतः फलतश्च विरोध एवेति प्रदर्श्यते । कर्मशब्देन चात्र अपरविद्याविषयभूतं कर्त्रादिसाधनक्रियारूपं विधिप्रतिषेधलक्षणं व्यापारसामान्यं ग्राह्यम् । तत्र कर्मणि तावत् कर्त्राद्यनेककारकोपसंहारद्वारेण स्ववाक्यज्ञानादन्यत्र विद्यतेऽनुष्ठेयोऽर्थः, ज्ञानविषये तु शब्दप्रकाशितार्थज्ञाननिष्ठाव्यतिरिक्तानुष्ठानापेक्षा न विद्यते (१-१-५, ६ : १४) । किञ्च स्वाभाविकाविद्याकामकर्मदोषवत्पुरुषानुष्ठेयं कर्म (१-२-१२, ३२) । अत एव हि कर्मानुष्ठातारः स्वस्वकामनियुक्तास्तत्तत्फलभोगाय तैस्तैः कामैर्वेष्टितास्तदनुगुणं शरीरं गृह्णन्ति ; आत्मज्ञानिनस्तु स्वात्मभूतब्रह्मप्राप्त्यैवाऽऽप्तकामा इहैव जन्मनि धर्माधर्मौ विद्यया प्रविलाप्य परिनिर्वृता भवन्ति (३-२-२, ७६) । फलं च कर्मणो दक्षिणोत्तरमार्गलक्षणं नरकतिर्यगादिलक्षणं वा सर्वं कृतकत्वाद्देशपरिच्छिन्नत्वाच्च अनित्यम् ; ज्ञानफलं त्वविकारिणः स्वात्मभूतब्रह्माव्यतिरिक्तत्वात्स्वाभाविकं न च देशपरिच्छिन्नमिति परममृतम् (१-२-१२, ३२ ; ३-२-६, ८०) इति ॥

तदेवं कर्मज्ञानयोस्तमःप्रकाशयोरिव विरुद्धस्वभावयोः सहभावासंभवात्, ज्ञानकर्मसमुच्चयानुष्ठानेन मोक्षमातिष्ठमाना वादिनो भ्रान्ताः । संन्यासनिष्ठैव ब्रह्मविद्या मोक्षसाधनमिति श्रुत्युद्घोषितमपि ते न विगणयन्ति (अव. भा. भा. २ : ३-२-६, ८०), अपरविद्यान्तर्गतमुपासनमेव परविद्यात्वेन विपर्यस्यन्ति, संसारगतिमेव चोत्तरायणलक्षणां मोक्षं मन्यन्ते (१-२-११, ३१) - इति सिद्धान्तितं भगवद्भिराचार्यैः ॥

मोक्षस्वरूपनिर्धारणम् –

'स यो ह वै तत्परमं ब्रह्म वेद ब्रह्मैव भवति' (३-२-९, ८३) इति सावधारणमुद्घोषयन्ती श्रुतिरविद्याप्रतिबन्धनिवृत्तिमात्रं मोक्षमावेदयति, न देशपरिच्छिन्नप्राप्तिम् (३-२-६, ८०)। अविद्याकामकर्माणि ज्ञानाविर्भावसमसमयं विनश्यन्तीति च (२-१-१०, ४९; २-२-९, ५८; ३-२-२, ७६) इहैव जन्मनि प्राप्यां सद्योमुक्तिमवधारयतीति च भाष्यकाराभिप्रायः। ज्ञानोदये सर्वकर्मक्षयात्सद्यः शरीरपातः इति मण्डनाद्यभिमतसद्योमुक्तिवादो वा, ज्ञानिनोऽपि प्रारब्धकर्मफलमुपभुञ्जानस्याविद्यालेशोऽवशिष्यत इति वदतामर्वाचीनव्याख्यातॄणां मतं वा न कथंचन सङ्गच्छते भाष्यकारमतेन। उपनिषदि हि ज्ञानिनां देहवियोगकालः 'परान्तकालः' (३-२-६) इति परिभाषितः। ज्ञानिनश्च शरीरपातानन्तरं देहारम्भिकाः प्राणादिकला स्वं स्वं कारणं गता भवन्ति (३-२-७) इत्युक्तम्। ज्ञानतृप्ताः शरीरपातकाले सर्वात्मभूतं ब्रह्मैवाविशन्ति (३-२-५) इत्युपदिष्टम्, विद्वान् स्वनामरूपे विहाय नद्य इव समुद्रं परात्परं पुरुषमुपैति (३-२-८) इति चाभिहितम्। सर्वमेतदालक्ष्य विदेहमुक्तिरेव मुख्या मुक्तिरिति माभूत्कस्यचिदपि मतिरिति भाष्यकाराः 'महाकाशे घटाकाशवत्' (३-२-६, ८०)। 'जलाद्यपनये इव सूर्यादिप्रतिबिम्बाः' (३-२-७, ८१) इति च जीवब्रह्मैक्यविशदीकरणाय दृष्टान्तावुदाजह्रुः। अत्रापि घटाकाशस्य नित्यं महाकाशादनन्यत्वं प्रतिबिम्बस्य च नित्यं बिम्बाव्यतिरिक्तत्वं च विवक्षितांशं ग्रहीतुमसमर्था अर्वाचीनवेदान्तिनः केचिदवच्छेदवादः, प्रतिबिम्बवादः – इति च वादद्वयं विकल्प्य जीवस्वरूपविषये विवदमाना दृश्यन्त इत्यहो मोहस्य माहात्म्यम्!

आत्मज्ञानसाधनानि –

वाक्यार्थज्ञानमात्रान्मुक्तिरिति शासतां भाष्यकाराणां प्रक्रियायां का वा आवश्यकता अध्यात्मसाधनानामिति केचिच्छङ्केरन्। तत्रायं समाधिः – इदं तावदिहावधेयं यद्ब्रह्मविद्या नाम न किञ्चिल्लौकिकं विज्ञानमिति। यत्कारणं सर्वस्यात्मभूतमिदं ब्रह्म शब्दादिविषयबुद्धिसाक्षित्वात् न बहिरिन्द्रियप्रधानैर्बाह्यप्रत्ययानुसारिभिरशुद्धमानसैर्ग्राह्यम्, न लौकिकविज्ञानगोचरम्, किन्तु आत्मप्रत्ययानुसारिभिरेव शास्त्राचार्योपदेशजनितेन शमदमध्यानसर्वत्यागवैराग्योद्भूतेनैव विशिष्टेन ज्ञानेन विज्ञानशब्दवाच्येन शक्यमवबोद्धुम् (१-२-१२, ३२; २-१-१, ३६; २-१-१०, ४९; २-२-८, ५७; ३-१-८, ७२)। यद्यपि वेदाध्ययन-

'अतो भाष्यबहिर्भूतो नानाजीववादः' इति । बृहदारण्यकभाष्यव्याख्यातापि 'यो यो देवानाम्' (१-४-१०) इति भाष्यव्याख्यानावसरे प्राह 'नानाजीववादस्य तु नावसरः प्रक्रमविरोधात्' इति । अपि च मुण्डकोपनिषद्भाष्यटीकायां लिखितं दृश्यते 'अविद्यापगमश्च ब्रह्मावगतिरेवेति व्याख्यानमस्माभिः ज्ञातोऽर्थस्तज्ज्ञप्तिर्वाऽविद्यानिवृत्तिरित्येतद्व्याख्यानावसरे' (पृ. ७) इति । 'ज्ञातोऽर्थस्तज्ज्ञप्तिर्वा तदज्ञानहानिः' इति वाक्यम् इष्टसिद्धौ (८-२, पृ. २६९) दृश्यते । अतोऽनेन इष्टसिद्धिरपि व्याख्यातृत्यनुमीयेत । परं तु यद्येवमेव तथ्यतः, तदा ब्रह्मैवैकमविद्यया बध्यते मुच्यते चेतीष्टसिद्धिवादसिद्धान्तोऽस्याप्यनुमतो भवेत् । न चैतदेवम् । अतो नूनमिदं वाक्यमन्यत्रैव स्थितमनेन व्याख्यात्रा परामृष्टमित्युह्येयं भवति ॥

भवतु वेदं यथा तथा. भगवतो भाष्यकारादर्वाक्कालिकोऽयमिति तु निर्विवादमेतत् । एवमादिकारणात्, अस्यां टीकायां यद्भाष्यानुगुणं पूर्वापरसंदर्भानुगुणं च, तन्मात्रमङ्गीकृत्य भाष्यविरुद्धतया प्रतिभासमानं व्याख्यानं नैवादृतमस्मदीयटिप्पणे । अत एव च 'प्रणवो धनुः' (२-२-४). इति 'मनोमयः प्राणशरीरनेता' (२-२-८) इति च वाक्यद्वयं प्रकरणं विच्छिद्य भाष्यविरोधमप्यविगणय्य क्रममुक्तिफलकध्यानविधायित्वेन व्याख्यातवतोऽस्य मतं प्रत्याख्यातमधस्तादिति ज्ञेयं सुधीभिः ॥

भाष्यकारादर्वाचीनैर्विवरणकारादिभिरारचिता अनिर्वचनीयमूलाविद्याप्रक्रिया तत्र तत्रानेन टीकाकारेण भाष्यकारीयत्वेन प्रदर्शिता दृश्यते । विशिष्य च 'भिद्यते हृदयग्रन्थिः' (२-२-९) इति मन्त्रभाष्यगतं 'हृदयग्रन्थिः अविद्यावासनाप्रचयो बुद्ध्याश्रयः कामः' इति व्याख्यानमधिकृत्य टीकाकारेण कृतं समालोचनं मननीयमस्तीति तदीयान्येव वाक्यान्यत्र वाचकमहाशयेभ्य उदाह्रियन्ते –

"अविद्यावासनाप्रचयो भिद्यत इति कोऽर्थः ? किं बुद्धौ विद्यमानाया अविद्याया भेदो ज्ञानफलम्, किं वा तन्निवृत्तौ ? नाद्यः । सत्युपादाने कार्यस्यात्यन्तोच्छेदासंभवात् । न द्वितीयः । ज्ञानस्याज्ञानेनैव साक्षाद्विरोधप्रसिद्धेः । किञ्च बुद्धिरप्यनादिः सादिर्वा ? नाऽऽद्यः : 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च' इति श्रुतिविरोधात् । नान्त्यः । प्रलये ब्रह्मज्ञानं विनैव बुद्धेर्नाशसंभवात्तदानर्थक्यप्रसङ्गात् । सादित्वे च बुद्धेरुपादानं साक्षाद्ब्रह्म चेत्तन्नाशं विना अत्यन्तोच्छेदो न स्यात् । माया चेत्सा द्रष्टृगतज्ञानेन नोच्छेदमर्हति । लौकिकमायाविगतमायाया द्रष्टृगतज्ञानेनोच्छेदादर्शनात् । किञ्च बुद्धेरुच्छेदो न तस्याः फलम्, स्वनाशस्याफलत्वात् । नात्मनः । तस्य बुद्धिप्रसङ्गाभावेन तदुच्छेदस्याफलत्वात् । किञ्च, आत्मनोऽविद्याद्यनाश्रयत्वाभिधाने श्रुतिविरुद्धं प्र(च ?)क्रमे । 'अविद्यायामन्तरे वर्तमानाः' इति श्रवणात् । उपसंहारे

च 'अनीशया शोचति मुह्यमानः' इति श्रवणात् । बुद्धिगतमेवाविद्यादि आत्मन्यध्यस्यत इति चेत् । अध्यस्यत इति कोऽर्थः ? निक्षिप्यते, भ्रान्त्या दृश्यते वा ? नाऽऽद्यः । अन्यधर्मस्यान्यत्र निक्षेपासंभवात् । भ्रान्त्या चेत्केन दृश्यते ? न तावदात्मना । तस्याविद्याद्याश्रयत्वानङ्गीकारात् । न बुद्ध्या । बुद्धेरात्मविषयत्वासंभवेन तद्गतदर्शनासंभवात् । तद्भ्रान्तेश्च स्वाश्रयगतेन तत्त्वानुभवेन निवर्त्यत्वप्रसिद्धेरनुभवाश्रयत्वप्रसङ्गात् । तस्मादस्य भाष्यस्य सम्यगर्थं पश्याम इति चेत् ।

"उच्यते । चिदन्त्रऽनादिरनिर्वाच्याऽविद्या चैतन्यमवच्छिद्य स्वावच्छिन्नचैतन्यस्य बुद्ध्यादिनादात्म्यरूपेण विवर्तते । तस्याश्च ब्रह्मात्मतासाक्षात्कारनिवर्त्यत्वा(पना ?)ङ्गीकारात्तन्निवृत्तौ तद्ग्रन्थहृदयग्रन्थिभेदः श्रुत्योच्यते । भाष्यकारीयं च बुद्ध्याश्रयत्वाभिधानम् अहङ्कारविशेषणत्वेनाविद्यादेर्व्यावहारिकाभिप्रायेण । आत्मनोऽनाश्रयत्वाभिधानं चाऽऽत्मनो निर्विकारत्वाभिप्रायम् । बाधितानुवृत्तिश्च प्रकटार्थे प्रादर्शीति जीवन्मुक्तिर्न विरुध्यते ॥"

यथोदाहृतं व्याख्यानं भाष्यकारवेदान्तप्रक्रियाया मूलस्तम्भभूतमध्यासवादं सार्वलौकिकानुभवानुसारियुक्त्युपबृंहितमपि तर्काभासेन शिथिलयितुं प्रवर्तते । अध्यासान्तःकरणयोरुपादानभूता अनिर्वाच्यानाद्यविद्या काचिदात्माश्रिताऽऽत्मविषया चास्तीति नूत्नां प्रक्रियां प्रस्थानत्रयभाष्ये कुत्रचिदपि यत्नवद्भिरप्यन्वेषकैरदृष्टचरीं पुरस्करोति । हृदयाश्रय एव कामो नात्माऽऽश्रय इति काठकबृहदारण्यकादिभाष्येषु कण्ठरवेणोक्तमपि भाष्यकाराभिप्रायं शुष्कतर्कबलादेवान्यथयितुमीहते । स्वाभिमतजीवन्मुक्तिवादरक्षणार्थमविद्यालेशो ज्ञानिनामप्यवशिष्यते यावत्प्रारब्धकर्मोपभोगमित्येनं भाष्ययुक्तिविरुद्धमभिप्रायं भाष्यकारीयत्वेनाऽऽदर्शयितुं प्रयतते । एषा च प्रक्रिया यद्यपीष्टसिद्ध्यादिग्रन्थेषु वितत्य प्रतिपादिता, तथापि भाष्यबहिर्भूता श्रुतियुक्त्यनुभवानुग्रहरहिता चेत्यन्यत्र सविस्तरं प्रदर्शितमितीह तन्निरसनायासो नास्थीयते । भाष्याकटाक्षितनवनवप्रक्रियाप्रत्युपस्थापनेन प्रस्थितानां व्याख्यानानामाश्रयणेन भाष्यार्थनिर्णयप्रयतनं क्वचिदनर्थपर्यवसाय्यपि भवेदिति विज्ञापनार्थमेव तु टीकेयं विमृष्टा न तु व्याख्यानानां सर्वथा निष्प्रयोजनत्वं स्थापयितुमिति विदुषां सविधे मम सविनया विज्ञप्तिः ॥

मुण्डकोपनिषद्भाष्याशयनिर्धारणे कियानुपकारो भवेज्जिज्ञासूनां मम टिप्पणेनेत्यत्र सहृदया गुणदोषज्ञा वाचकमहोदया एव प्रमाणम् । मदीयामिमामल्पीयसीं सेवां स्वीकृत्य मामनुगृहीतवतां भगवत्पादानां चरणयुगलचिरस्मरणेनैव तु कृत्यहमित्यलं पल्लवितेन ॥

अध्यात्मप्रकाशकार्यालये<br>
शार्वरनामसंवत्सरस्य आश्विनकृष्णनवम्याम्

टिप्पणकर्ता

# ग्रन्थविभागक्रमः

( अत्रत्यसङ्ख्या पृष्ठसूचिका )

# विषयानुक्रमणिका

## उपनिषदवतरणिकाभाष्यम्



---

## प्रथममुण्डके – प्रथमः खण्डः

### विद्यासंप्रदायकर्तृपरम्परा



### शौनकस्य प्रश्नः



### परापरविद्याविभागः



### अपरविद्यास्वरूपम्



### परविद्यास्वरूपम्



## प्रथममुण्डके – द्वितीयः खण्डः

* ಓಂ *

# ಮಾನಸೋಲ್ಲಾಸ

-:o:⌒:o:-

## ೧. ಪರಮಾತ್ಮನ ಅದ್ವೈತತ್ವ

### ಮಂಗಳ

ಮಙ್ಗಲಂ[1] ದಿಶತು ಮೇ ವಿನಾಯಕೋ
ಮಙ್ಗಲಂ ದಿಶತು ಮೇ ಸರಸ್ವತೀ ।
ಮಙ್ಗಲಂ ದಿಶತು ಮೇ ಮಹೇಶ್ವರೀ[2]
ಮಙ್ಗಲಂ ದಿಶತು ಮೇ ಸದಾಶಿವಃ ॥ ೧ ॥

೧. ವಿನಾಯಕನು ನನಗೆ ಮಂಗಲವನ್ನುಂಟುಮಾಡಲಿ ! ಸರಸ್ವತಿಯು ನನಗೆ ಮಂಗಲವನ್ನುಂಟುಮಾಡಲಿ ! ಮಹೇಶ್ವರಿಯು ನನಗೆ ಮಂಗಲವನ್ನುಂಟುಮಾಡಲಿ ! ಸದಾಶಿವನು ನನಗೆ ಮಂಗಲವನ್ನುಂಟುಮಾಡಲಿ !

### ದಕ್ಷಿಣಾಮೂರ್ತಿ ಎಂದರೆ ಯಾರು ?

ಆತ್ಮಲಾಭಾತ್ ಪರೋ ಲಾಭೋ ನಾಸ್ತೀತಿ ಮುನಯೋ ವಿದುಃ ।
ತಲ್ಲಾಭಾರ್ಥಂ ಕವಿಃ ಸ್ತೌತಿ ಸ್ವಾತ್ಮಾನಂ ಪರಮೇಶ್ವರಮ್ ॥ ೨ ॥
ಸ್ವೇಚ್ಛಯಾ ಸೃಷ್ಟಮಾವಿಶ್ಯ ವಿಶ್ವಂ ಯೋ ಮನಸಿ ಸ್ಥಿತಃ ।
ಸ್ತೋತ್ರೇಣ ಸ್ತೂಯತೇಽನೇನ ಸ ಏವ ಪರಮೇಶ್ವರಃ ॥ ೩ ॥

೨–೩. ಆತ್ಮಲಾಭಕ್ಕಿಂತ ಹೆಚ್ಚಿನ ಲಾಭವಿಲ್ಲವೆಂದು ಮುನಿಗಳು[3] ಅಭಿಪ್ರಾಯಪಟ್ಟಿರುತ್ತಾರೆ. ಆ (ಆತ್ಮನ) ಲಾಭಕ್ಕಾಗಿ

---

1. 'ಮಙ್ಗಳಂ' ಎಂದೇ ಮುದ್ರಿತಪುಸ್ತಕಗಳ ಪಾಠ ; ಲಳಕಾರಗಳಿಗೆ ಯಾವ ಭೇದವೂ ಇಲ್ಲವಾದರೂ 'ಮಂಗಲ' ಎಂದು ಬರೆಯುವದೇ ಹೆಚ್ಚು ರೂಢಿ.

2. 'ಮಹೇಶ್ವರೋ' ಎಂದು ಮೂರನೆಯ ಪಾದದಲ್ಲಿ, 'ಮಹೇಶ್ವರೀ' ಎಂದು ನಾಲ್ಕನೆಯ ಪಾದದಲ್ಲಿ ಪಾಠಾಂತರಗಳುಂಟು. ಈ ಮಂಗಲಶ್ಲೋಕದ ವಿಷಯಕ್ಕೆ ಪೀಠಿಕೆಯನ್ನು ನೋಡಿ.

3. ಆಪಸ್ತಂಬಾದಿಗಳು.

# ग्रन्थसंस्करणम्

[ दृशनमात्रेण सुशोधिता दोषाणामत्र न समावेशः कृतः । ]

| पृष्ठे | | पठितव्यम् |
|---|---|---|
| 12 | अष्टमपङ्क्तौ | मनो व्यावर्त्य |
| ,, | एकादश ,, | देहाद्यात्मप्रत्ययतिरस्कारपूर्वकम् |
| ,, | त्रयोदश ,, | (२-२-४, ५३) इति |
| ,, | एकोनविंश ,, | खलूपनिषद्भागे |
| ,, | उपान्त्य ,, | (२-२-५) इत्यादिषु । |
| ८ | चतुर्थटिप्पणे | विदितायां |
| ९ | षष्ठ ,, | व्यासेश्वरा |
| १६ | द्वितीय ,, | अतो न तदक्षरं द्रव्यमिति |
| ३७ | तृतीय ,, | लौकिककर्माणि दोषप्रयुक्तज्ञानकृतिसाध्यानि |
| ,, | अष्टम ,, | सर्वस्यैव कर्मफलस्यानित्यत्वासारत्वा- |
| ४७ | द्वितीय ,, | संव्यवहारविषयमेव |
| ५० | एकादश ,, | 'मन आत्मन्येव' ( इति समस्तं पदम् ) |
| ६५ | द्वितीयपङ्क्तौ | शर इव |
| ६८ | द्वितीय टिप्पणे | देवानामुपचरितुः |
| ८३ | प्रथम ,, | परमात्मनो |
| ८४ | पञ्चम ,, | वे. सू. ४-४-१७ |
| ८८ | द्वितीय ,, | भा. भा. ६२. |
| ,, | सप्तम ,, | यथाभूतात्म |



# सङ्केताक्षरविवरणम्

| सङ्केतः | विवरणम् |
|---|---|
| अव. | अवतरणिकायां |
| आ॥ | आनन्दाश्रमः, पूना – इत्येतत्संस्थया प्रकाशितपुस्तके |
| ई., के. का. (अथवा क.), प्र. मां., तै., ऐ., छां., बृ., श्वे. | – एते आद्याक्षरकृतसङ्केताः तत्तदुपनिषद्बोधकाः |
| ई. भा., के. भा., | – इत्यादयस्तु तत्तद्भाष्यबोधकाः |
| उप. | उपसंहारे |
| खं. | खण्डः |
| गी. | भगवद्गीतायाम् |
| गी. भा. | भगवद्गीताभाष्ये |
| गौ. का. भा. | गौडपादीय कारिकाभाष्ये |
| गौ. ध. | गौतमधर्मसूत्रे |
| तै. सं. | तैत्तिरीयसंहितायाम् |
| ब्र. सि. | ब्रह्मसिद्धौ |
| भा. भा. | भाष्यभागः |
| मो. ध. | मोक्षधर्मे |
| रा. ध. | राजधर्मे |
| वा॥ | श्रीरङ्गस्थ वाणीविलाससमुद्रालये प्रकटिते पुस्तके |
| वे. सू. | वेदान्तसूत्राणि |
| शत. ब्रा. | शतपथब्राह्मणे |

सङ्केताक्षरं विना दत्ताः सङ्ख्याः, मुण्डकखण्डमन्त्रसूचका इति विज्ञेयम् ॥

# प्रथमवारं पठितृभिरवश्यमवधेयम्

ईशावास्यकेनोपनिषद्भाष्ये अवलोक्यैव यद्यनन्तरमिदं भाष्यं विमृश्येत, तर्हि नैके ग्रन्थग्रन्थयः स्वयमेव भिद्येरन् विनैव क्लेशम् ॥

आदौ मूलभाष्यमेवाध्येतव्यम् आपरिसमाप्तिः; येन कृत्स्नोपनिषदर्थः सामान्येन हृदयं प्रविशेत् । ततो द्वितीयवारं टिप्पणसहायोपेतं भाष्यपठनं कार्यम्; तथा च भाष्यार्थग्रहणनिर्धारणयोर्विशेषवैशारद्यं प्राप्नोति जिज्ञासूनामन्तःकरणम् । टिप्पणे तत्र तत्रोपलभ्यमाना भाष्यान्तरपरामर्शाः प्रौढविद्यार्थिनां विचारप्रचोदनाय, प्रस्थानत्रय-भाष्येष्वविगानेनैकरूपैव वेदान्तप्रक्रिया दर्शितेति दृढनिश्चयसंपादनाय चेति बोध्यम् ॥

॥ ॐ ॥

श्रीमच्छाङ्करभाष्यसंयुता

# मुण्डकोपनिषत्

ॐ भद्रं कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः ।
स्थिरैरङ्गैस्तुष्टुवांसस्तनूभिर्व्यशेम देवहितं यदायुः ॥
ॐ शान्तिः शान्तिः शान्तिः ॥

## अथोपनिषदवतरणिकाभाष्यम्

### ब्रह्मविद्यायाः संबन्धप्रयोजने

१. ॐ[1] 'ब्रह्मा देवानाम्' इत्याद्या[2] आथर्वणोपनिषत् । अस्याश्च विद्यासंप्रदायकर्तृपारम्पर्यलक्षण[3]संबन्धम्[4] आदावेवाऽऽह

## अथ सच्चिदानन्देन्द्रसरस्वतीकृतं टिप्पणम्

अदृश्यत्वादिगुणकं ह्यजं सद् भूतकारणम् ॥
अक्षरं परमात्मा यः सर्वज्ञं तमुपास्महे ॥
ॐ नमो ब्रह्मादिभ्यो ब्रह्मविद्यासंप्रदायकर्तृभ्यः ॥

1. 'ॐ' इति केषुचिदेव मुद्रितपुस्तकेषु दृश्यते ॥

2. 'इत्याद्या' इति एतदादिग्रन्थप्रतिपाद्या विद्या, ग्रन्थरूपा चोच्यते उपनिषदिति ॥

3. 'लक्षणं सबन्धम्' वा ॥

4. तत्र विद्याया एव तावत्संबन्धप्रयोजने उच्येते, ग्रन्थस्य तत्प्रकाशकत्वेनैव ते उक्ते भवत इति कृत्वा । ब्रह्मादिपरमर्षिभिर्गुरुशिष्यक्रमेण परेण परेण परस्मै परस्मै प्रत्ता विद्येति संप्रदायकर्तृत्वं तेषाम्, तत्पारम्पर्यलक्षणसंबन्धो विद्यायास्तैः ॥

स्वयमेव स्तुत्यर्थम्। एवं हि महद्भिः परमपुरुषार्थसाधनत्वेन[1] गुरुणा आयासेन लब्धा विद्येति[2]। श्रोतृबुद्धिप्ररोचनाय विद्यां महीकरोति। स्तुत्या प्ररोचितायां हि विद्यायां सादराः प्रवर्तेरन्[3] इति ॥

प्रयोजनेन तु विद्यायाः साध्यसाधनलक्षणसंबन्धम्[4] उत्तरत्र वक्ष्यति 'भिद्यते हृदयग्रन्थिः' (२-२-९) इत्यादिना। अत्र च[5] अपर-शब्दवाच्यायां ऋग्वेदादिलक्षणायां विधिप्रतिषेधमात्रपरायां विद्यायां[6] संसारकारणाविद्यादिदोषनिवर्तकत्वं[7] नास्ति इति स्वयमेवोक्त्वा परापरेति[8] विद्याभेदकरणपूर्वकम्, 'अविद्यायामन्तरे वर्तमानाः' (१-२-८)

1. परमपुरुषार्थो मोक्षः। तत्प्राप्त्यनन्तरं पुरुषेणार्थनीयस्य अन्यस्य कस्यचिदप्यनवशेषात्। तत्साधनं ब्रह्मविद्येति ॥

2. इति स्तुत्यर्थम् इति संबन्धः ॥

3. विद्याप्राप्त्यर्थं श्रवणादिसाधनानुष्ठाने इति शेषः ॥

4. 'साध्यसाधनलक्षणं संबन्धम्' इति व्यस्तपाठो वा ॥, 'पारम्पर्यलक्षणं संबन्धम्' इति च। ब्रह्मविद्या साधनम्, अविद्यादिनिवृत्तिः परप्राप्तिश्च प्रयोजनं साध्यम् इति प्रयोजनेन विद्यायाः साध्यसाधनलक्षणः संबन्धः। ब्रह्मात्मभावस्य नित्यप्राप्तत्वात् अविद्यादिनिवृत्तिद्वारेणैव तस्य प्राप्तिः इत्यभिप्रेत्य ग्रन्थिभेदादेः साक्षात्प्रयोजनत्वेन निर्देश इति बोध्यम् ॥

5. अविद्यादिनिवृत्तिर्यदि प्रयोजनं, तर्हि कर्मणैव तन्निवर्त्यतामित्याशङ्क्याह अत्र चेति। अपरशब्दरूपसमाख्या, 'अविद्यायामन्तरे...' इति निन्दात्मकश्रुत्यर्थापत्तिश्च कर्मणस्तदनिवर्तकत्वे प्रमाणमिति भावः ॥

6. 'अपरशब्दवाच्यायाः ..... विद्यायाः' इति षष्ठीपाठो वा ॥

7. 'अविद्यादि' इति आदिशब्देन कामकर्मणी विवक्षिते। अपरा विद्या विधिप्रतिषेधलक्षणा विधिप्रतिषेधमात्रगोचरा। तस्या अविद्यादिनिवर्तकत्वं नास्ति। अविद्यामवलम्ब्यैव, अविद्याक्षेत्रमात्रलब्धशरीरयोरेव च साध्यसाधनयोः प्रकाशकत्वात् ॥

8. इतिशब्दो नास्ति भा ॥

इत्यादिना, तथा परप्राप्तिसाधनं[1] सर्वसाधनसाध्यविषयवैराग्यपूर्वकं[2] गुरुप्रसादलभ्यां ब्रह्मविद्याम् आह 'परीक्ष्य लोकान्' (१–२–१२) इत्यादिना ॥

प्रयोजनं च असकृत् ब्रवीति 'ब्रह्म वेद ब्रह्मैव भवति'[3] (३–२–९) इति। 'परामृताः परिमुच्यन्ति सर्वे' (३–२–६) इति च ॥

## केवला विद्यैव मुक्तिसाधनम्

२. ज्ञानमात्रे यद्यपि सर्वाश्रमिणाम् अधिकारः[4], तथापि संन्यासनिष्ठैव ब्रह्मविद्या मोक्षसाधनं न कर्मसहिता[5] इति 'भैक्ष्यचर्यां

1. परप्राप्तिः ब्रह्मात्मताप्राप्तिः। तस्याः साधनं ब्रह्मविद्या अविद्यादिनिवर्तनद्वारेण ॥

2. साधनानि पुत्रकर्मोपासनानि, साध्या मनुष्यपितृदेवलोकाः (बृ. १–५–१६)। अत्र न केवलं कर्मणोऽविद्यात्वनिर्देशात्, किं तु तत्फले 'ब्राह्मणो निर्वेदमायात्' इति वैराग्योपदेशाच्च तस्य अविद्यादिनिवर्तकत्वं नास्तीत्यवगम्यत इति भावः ॥

3. अत्राप्यविद्यादिनिवृत्तिरेव साक्षात्प्रयोजनत्वेन विवक्षिता, न ब्रह्मभावः। अविद्यापगममात्रत्वाद् ब्रह्मभावप्राप्तेः (बृ.भा. १–४–१०.)। अत एव हि 'परिमुच्यन्ति' इत्यविद्यादिनिवृत्तिर्वाक्यशेषे समुल्लिख्यत इत्यवगन्तव्यम् ॥

4. यद्यपि केवलं कर्म न मुक्तिसाधनं भवेत्, तथापि विद्यासमुच्चितं तत्साधनं स्यादित्याशङ्क्य श्रुतिविरुद्धोऽयमभ्युपगम इत्याह– यद्यपीति। सर्वाश्रमिणामभ्युपगतं ज्ञानं न तत्त्वदर्शनपर्यन्तमित्याकूतम् ॥ गी. भा. ४–३४.

5. ज्ञानकर्मसमुच्चयवादः सर्वत्र प्रस्थानत्रयभाष्येषु निराकृतो दृश्यते यथा ई. भा. अव.उप., के. भा अव. ; का. भा. १–१–२० ; तै. भा. शीक्षा. उप ; ऐ. भा. अव. ; छां. भा. अव. ; बृ.भा. ३–३–१ ; गी.भा.अव. ३–१.....; सू. भा. पुरुषार्थाधिकरणे ॥

चरन्तः' (१-२-११), 'संन्यासयोगात्' (३-२-६) इति च ब्रुवन्[1] दर्शयति ॥

विद्याकर्मविरोधाच्च[2]। न हि ब्रह्मात्मैकत्वदर्शनेन सह कर्म स्वप्नेऽपि[3] संपादयितुं शक्यम्। विद्यायाः कालविशेषाभावात्, अनियत-निमित्तत्वाच्च[4] कालसंकोचानुपपत्तिः[5]। यत्तु गृहस्थेषु ब्रह्मविद्यासंप्रदाय-कर्तृत्वादिलिङ्गम्[6], न तत् स्थितं न्यायं बाधितुमुत्सहते[7]। न हि

1. 'भैक्षचर्यां चरन्तः' इति ब्रुवन् वेदः ज्ञानमात्रे उपासनारूपे सर्वाश्रमिणामधिकार इति दर्शयति। तत्र हि वानप्रस्थाः, अपरमहंसाः संन्यासिनो, गृहस्थाश्च ज्ञानप्रधाना उत्तरायणद्वारेण सत्यलोकं प्रयान्तीति अपरविद्यावन्त आश्रमिणः परामृष्टाः। न तु तेषां सद्योमुक्तिरुक्ता। अतो न सा मोक्षसाधनविद्या। 'संन्यासयोगात्' इति च ब्रुवन् कर्मसंन्यासनिष्ठैव ब्रह्मविद्या मोक्षसाधनमिति दर्शयति। 'परिमुच्यन्ति' इत्यात्यन्तिकमोक्षवचनात्, 'ब्रह्म वेद ब्रह्मैव भवति' (३-२-९) इति अन्तरेणैव गतिं वेदनमात्रेण ब्रह्मभावस्य वक्ष्यमाणत्वाच्चेति भावः ॥

2. युक्तिविरुद्धश्चायं समुच्चयवादः। न ह्यकर्तृबुद्धिरूपब्रह्मविद्यया कर्तृ-बुद्धिपूर्वकं कर्म कथंचिदपि समुच्चेतुं शक्यमिति भावः। एतेन उदाहृतश्रुते-र्न्यायोपबृंहितत्वमुक्तम् ॥

3. स्वप्नेऽन्यत्रासंभावितमपि क्वचिच्छक्यं द्रष्टुम्। समुच्चयस्तु तत्रापि न शक्यदर्शन इति भावः ॥

4. चवियुक्तपाठादयमेव गरीयान् ॥

5. 'कालसंकोचानुपपत्तेः' इति पाठोऽसमीचीनः। विद्याया अग्निहोत्रादिवत् कालविशेषापेक्षा नास्ति, न च घटादिज्ञानवत् नियतकादाचित्कनिमित्तविशेष-मपेक्ष्य तस्या जन्म। कालातीतब्रह्मस्वरूपभूतैव हि सा। अतश्च विद्याया यदा उपरमस्तदैव कर्म करिष्यतीत्यपि न संभावनीयमिति भावः ॥

6. 'शौनको ह वै महाशालः' (१-१-३) इति महागृहस्थस्य अङ्गिरसो विद्याप्राप्तेः श्रुतत्वात्, तस्मादेव गुरुपर्वक्रमेणेदानीन्तनैरासादितत्वाद् विद्यायाः, गृहस्थेष्वपि ब्रह्मविद्यासंप्रदायकर्तृत्वं श्रुत्यैवानुज्ञातमिति गम्यत इत्यभिप्रायः ॥

7. शौनकादेः संप्रदायकर्तृत्वं लिङ्गमात्रं, न तत् उदाहृतन्यायोपबृंहित-श्रुतेर्बाधकम्। लिङ्गात् श्रुतेर्बलीयस्त्वादिति भावः ॥

विधिशतेनापि तमःप्रकाशयोरेकत्र सद्भावः शक्यते कर्तुम्[1], किमुत लिङ्गैः केवलैरिति[2] ॥

## उपनिषदो व्याख्येयत्वोपपादनोपसंहारः

३. एवम् उक्तसंबन्धप्रयोजनाया उपनिषदः[3] अल्पाक्षरं ग्रन्थविवरणम् आरभ्यते[4]। ये इमां ब्रह्मविद्याम् उपयन्ति आत्मभावेन[5] श्रद्धाभक्तिपुरस्सराः सन्तः, तेषां गर्भजन्मजरारोगाद्यनर्थपूगं निशातयति। परं वा ब्रह्म गमयति, अविद्यादिसंसारकारणं वा[6] अत्यन्तम्

1. यदि नाम श्रुतिशतेनापि ज्ञानकर्मसमुच्चयः कर्तव्यत्वेन विहितोऽभविष्यत्, तदापि युक्त्युपबृंहितश्रुतिविरोधात्तादृशो विधिरप्रमाणमेवाभविष्यत्। विपरीतबोधकत्वात्। न हि विरुद्धस्वभावयोः कर्तृत्वाकर्तृत्वयोरेकत्र समुच्चयः शक्यसंपादन इति। नैव तु श्रुतिस्तथा विधत्ते ॥

2. गृहस्थेषु संप्रदायकर्तृत्वनिर्देशरूपलिङ्गमात्रात् न्यायविरुद्धस्य समुच्चयस्य अशक्यावगमात्, तादृशेषु लक्ष्यमाणं गार्हस्थ्यमाभासमात्रम्। तेषां कर्म अकर्मैव, ब्रह्मबुद्ध्युपमृदितत्वादिति लिङ्गमेव कथंचिदन्यथा नेयमिति भावः ॥ गी. भा. ४-२०, २३, २४.

3. विद्यायाः संप्रदायकर्तृपारम्पर्यलक्षणः संबन्धो ब्रह्मादिभिः, साध्यसाधनलक्षणः संबन्धः प्रयोजनेनेति संबन्धद्वयमुक्तम्। ग्रन्थस्य च विद्याप्रतिपादकत्वात्, विद्यया प्रतिपाद्यप्रतिपादकभावः संबन्धः। विद्याप्रतिपत्त्या च प्रयोजनभूतया जन्यजनकभावः संबन्धः इत्यर्थादुक्तं भवति। तादृशप्रयोजनस्य च स्वप्रयोजनेनाविद्यादिनिवृत्त्या साध्यसाधनसंबन्धस्य सत्त्वात्, ग्रन्थस्यापि परम्परया तादृशप्रयोजनवत्त्वं सेत्स्यतीति ग्रन्थरूपोपनिषदोऽपि संबन्धप्रयोजने उक्ते एव भवत इति कृत्वा आह एवमुक्तसंबन्धप्रयोजनाया इति ॥

4. उक्ताभिधेयसंबन्धप्रयोजनवत्त्वेन ग्रन्थस्य व्याख्येयत्वे सिद्धे, उक्तप्रयोजनकाङ्क्षिणामुपकारार्थं ग्रन्थविवरणमारभ्यते इत्यर्थः। 'अल्पाक्षरम्' इति तु बह्वर्थसूचकत्वाद्वाचकैरेतद्भाष्यावलोकने सावधानैर्भवितव्यमिति सुहृद्भावेनोपदेशनार्थम् ॥

5. 'उप' इत्युपसर्गस्य व्याख्या ब्रह्मण्यात्मभावेन आदरेणोपगच्छन्तीति ॥

6. चयुक्तपाठाद् वाकारयुक्त एव गृहीतो वरं प्रक्रमामनाय ॥

अवसादयति, विनाशयति इत्युपनिषत्[1] । उपनिपूर्वस्य सदेः एवमर्थस्मरणात्[2] ॥

1. 'नि' इत्यस्य नितरामिति, धातोर्विशरणमिति चार्थं स्वीकृत्य निशातयतीत्युक्तम्। गत्यर्थकत्वं धातोः स्वीकृत्य ब्रह्म गमयतीति, अवसादनार्थकत्वं चोपेत्य अवसादयतीति। अत्र अविद्यानिवृत्तिद्वारेणैव जन्मादिनिशातनं ब्रह्मगमयितृत्वं च विद्याया बोध्यम्। यद्यपि सुषुप्तादावपि अनर्थनिवृत्तिर्ब्रह्मप्राप्तिश्च भवत एव, तथापि न ते तथा आत्यन्तिक्यौ तदा यथा विद्यया इति नितरामित्यर्थकनीत्युपसर्गस्वारस्यं बोध्यम् ॥

2. षद्लृ विशरणगत्यवसादनेषु इति वैयाकरणस्मृतिमनुसृत्यैवं विद्याया उपनिषच्छब्दवाच्यत्वं विशदीकृतम्। ग्रन्थे तु तादर्थ्यादुपनिषच्छब्दप्रवृत्तिरिति भावः। द्रष्टव्यात्र का० भा० अवतरणिका ॥

# प्रथममुण्डके – प्रथमः खण्डः

## विद्यासम्प्रदायकर्तृपरम्परा

ब्रह्मा देवानां प्रथमः संबभूव
विश्वस्य कर्ता भुवनस्य गोप्ता।
स ब्रह्मविद्यां सर्वविद्याप्रतिष्ठा-
मथर्वाय ज्येष्ठपुत्राय प्राह ॥ १ ॥

### संप्रदायप्रवर्तकस्य ब्रह्मणः प्रशंसा

४. ब्रह्मा परिवृढः महान्। धर्मज्ञानवैराग्यैश्वर्यैः[1] सर्वान्न्यान् अतिशेते इति। देवानां द्योतनवताम् इन्द्रादीनां प्रथमः गुणैः प्रधानः सन्। प्रथमः अग्रे वा[2]। संबभूव अभिव्यक्तः सम्यक् स्वातन्त्र्येण इत्यभिप्रायः। न तथा यथा धर्माधर्मवशात् संसारिणोऽन्ये जायन्ते[3]। 'योऽसावतीन्द्रियोऽग्राह्यः' (मनु. १–७) इत्यादिस्मृतेः[4]। विश्वस्य सर्वस्य

1. 'ज्ञानमप्रतिघं यस्य वैराग्यं च जगत्पतेः। ऐश्वर्यं चैव धर्मश्च सह सिद्धं चतुष्टयम्।' (?) इति पौराणिकस्मृत्यवगतमहत्त्व इति भावः॥

2. ब्रह्मा इत्यनेनैव गुणैः प्राधान्यस्य अवगतत्वात् प्रथम इति व्याख्यान्तरम्। 'महद्यक्षं प्रथमजम्' (बृ. ५–४–१) इति श्रुत्यन्तरात्॥

3. यथा संसारिणः शुक्रशोणितसंयोगेन जायन्ते न तथा इति द्योतयितुं 'संबभूव' इत्यत्र सम् इत्युपसर्ग इति भावः॥

4. 'योऽसावतीन्द्रियोऽग्राह्यः सूक्ष्मोऽव्यक्तः सनातनः। सर्वभूतमयोऽचिन्त्यः स एष स्वयमुद्बभौ।' इति पूर्णः श्लोकः॥ ब्रह्मा हिरण्यगर्भः परो वा, संसारी वेति चिन्तितं बृहदारण्यकभाष्ये (१–४–६)। निर्णीतं च उपाधिशुद्ध्यतिशयापेक्षया तु तस्य प्रायशः परत्वमेवेति श्रुतिस्मृतिवादाः, संसारित्वं तु क्वचिदेव दर्शयन्तीति। तदत्रासंसारित्वं स्वीकृत्योक्तं स्वातन्त्र्येणाभिव्यक्त इति॥

जगतः कर्ता उत्पादयिता। भुवनस्य उत्पन्नस्य गोप्ता पालयिता इति विशेषणं ब्रह्मणो, विद्यास्तुतये[1]।

## ब्रह्मणा अथर्वणे प्रत्ता ब्रह्मविद्या

५. स एवं प्रख्यातमहत्त्वो ब्रह्मा **ब्रह्मविद्याम्**। ब्रह्मणः परमात्मनः विद्यां ब्रह्मविद्याम्। 'येनाक्षरं पुरुषं वेद सत्यम्' (१-२-१३) इति विशेषणात् परमात्मविषया हि सा। ब्रह्मणा वा अग्रजेन उक्ता इति ब्रह्मविद्या। तां[2] सर्वविद्याप्रतिष्ठां सर्वविद्याभिव्यक्तिहेतुत्वात् सर्वविद्याश्रयाम् इत्यर्थः[3]। सर्वविद्यावेद्यं वा वस्तु अनयैव विज्ञायते इति। 'येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातम्' (छां. ६-१-३) इति श्रुतेः[4]। सर्वविद्याप्रतिष्ठाम् इति च स्तौति[5] विद्याम्। अथर्वाय ज्येष्ठपुत्राय प्राह। ज्येष्ठश्च असौ पुत्रश्च। अनेकेषु[6] ब्रह्मणः सृष्टिप्रकारेषु

1. एवं विशिष्टेन महता संप्रदायकर्त्रा प्रोक्ता विद्येति स्तुतये॥

2. अस्यानन्तरं 'ब्रह्मविद्यां' इत्यधिकं वा॥

3. सर्वविद्यानाम् अभिव्यक्तिहेतुर्ब्रह्मविद्या। तत्प्रयुक्तास्तदुपकारकत्वेन हि सर्वा विद्या अभिव्यक्ताः इति कृत्वा सर्वविद्यानां प्रतिष्ठा आश्रयभूता इयं विद्या इत्यर्थः॥

4. सर्वा विद्या अस्यामेव प्रतितिष्ठन्ति स्वविषयविज्ञापनार्थमेनां समाश्रयन्ते। एतद्विद्याविषय एव हि सर्वासां विकल्पानामितरविद्याविषयाणामास्पदम्॥ अस्याम् उदितायां तेषां प्रातिस्विकं वेद्यमपि याथातथ्येन विदितमेव भवतीति कृत्वा सर्वविद्याप्रतिष्ठा ब्रह्मविद्या। यथा चेदं तथा अङ्गिरःशौनकसंवादे स्फुटीभविष्यति। अत्र श्रुत्यन्तरसंवादोऽप्यस्तीत्याह 'येनाश्रुतम् ...' इति श्रुतेरिति॥

5. पूर्वं ब्रह्मणः संप्रदायकर्तुर्गुणकथनेन विद्या स्तुता। इदानीं तु तां साक्षात् स्तौति प्ररोचनार्थमिति भावः॥

6. ननु ब्रह्मणो विराट् पुत्र इति प्रसिद्धिः। कथमथर्वणस्तत्पुत्रत्वेत्याशङ्क्य परिहारमाह-अनेकेष्वित्यादिना। अनेनानादिकालात् प्रसिद्धेयं ब्रह्मविद्येति ध्वनितम्॥

अन्यतमस्य सृष्टिप्रकारस्य प्रमुखे पूर्वम् अथर्वा सृष्टः इति ज्येष्ठः। तस्मै ज्येष्ठपुत्राय प्राह उक्तवान्[1] ॥ १ ॥

**अथर्वणे यां प्रवदेत ब्रह्मा-**
**थर्वा तां पुरोवाचाङ्गिरे ब्रह्मविद्याम्।**
**स भारद्वाजाय सत्यवहाय प्राह**
**भारद्वाजोऽङ्गिरसे परावराम् ॥ २ ॥**

**अथर्वा, अङ्गीः, भारद्वाजः – इति परम्परया अङ्गिरसा प्राप्ता विद्या**

६. याम् एताम् अथर्वणे प्रवदेत अवदत्[2] ब्रह्मविद्यां ब्रह्मा, तामेव ब्रह्मणः प्राप्ताम् अथर्वा पुरा पूर्वम् उवाच उक्तवान् अङ्गिरे अङ्गीर्नाम्ने ब्रह्मविद्याम्। स च अङ्गीः, भारद्वाजाय भरद्वाजगोत्राय सत्यवहाय सत्यवहनाम्ने[3] प्राह प्रोक्तवान्। भारद्वाजोऽङ्गिरसे स्वशिष्याय पुत्राय वा[4] परावराम्। परस्मात्परस्मात् अवरेण प्राप्ता इति परावरा[5]। परापर-सर्वविद्याविषयव्याप्तेर्वा[6]। तां परावराम् अङ्गिरसे प्राह इति अनुषङ्गः ॥२॥

---

1. 'प्रोक्तवान्' इति वा ॥
2. छन्दसि लकारानियमात् 'प्रवदेत' इति प्रयोगः ॥
3. 'सत्यवाह' इति मूले भाष्ये च क्वचित् ॥
4. श्वे. ६-२२.
5. एवं गुरुशिष्यपरम्परया प्राप्ता पित्रा प्रियपुत्राय प्रत्ता वा, नान्येन सुखप्राप्या ॥
6. परविद्याविषयव्याप्तेः परा। अपरविद्याविषयव्याप्तेरपरा। एवं निर्गुण-सगुणोभयविषयव्याप्तेः परा चावरा चेति परावरा। एकमेव हि ब्रह्म ज्ञेयत्वेन पर-विद्याविषयः, उपास्यत्वेन च अपरविद्याविषयः इति। अथवा परं च कारणरूपम्, अपरं च कार्यरूपं ब्रह्मैव परावरम्। 'तस्मिन् दृष्टे परावरे' (२-२-९) इति श्रुतेः। तद्विषया विद्या परावरा। सा च सर्वविद्याविषयव्यापिनी। स्वविषय-ज्ञापनेनैव सर्वज्ञत्वापादनात्। 'सर्वविद्याप्रतिष्ठाम्' (१-१-१) इति ह्युक्तम् ॥

## शौनकस्य प्रश्नः

**शौनको ह वै महाशालोऽङ्गिरसं विधिवदुप-सन्नः पप्रच्छ। कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवतीति ॥ ३ ॥**

### शौनकस्य गुरूपसत्तिः

७. शौनकः शुनकस्यापत्यं महाशालः महागृहस्थः अङ्गिरसं भारद्वाजशिष्यम् आचार्यम् विधिवत् यथाशास्त्रम् इत्येतत्, उपसन्नः उपगतः सन्, पप्रच्छ पृष्टवान्। शौनकाङ्गिरसोः संबन्धादर्वाक् विधिवद्विशेषणात्[1] उपसदनविधेः पूर्वेषाम् अनियम इति गम्यते[2]। मर्यादाकरणार्थं मध्यदीपिकान्यायार्थं वा विशेषणम्[3]। अस्मदादिष्वपि उपसदनविधेरिष्टत्वात्। किमिति? आह- कस्मिन्नु भगवो विज्ञाते। नु इति वितर्के। भगवः हे भगवन्[4], सर्वं यदिदं विज्ञेयं, विज्ञातं विशेषेण ज्ञातम् अवगतं भवति इति ॥

1. 'विधिवद्विशेषणाभावात्' इति पाठोऽशुद्धः ॥

2. अनेन तेषां पूर्वेषां प्रज्ञावैशारद्यातिशययोगः सूच्यते ॥

3. शौनकादारभ्य इदानीन्तनजिज्ञासुजनपर्यन्तम् उपसदनविधिव्याप्तिः इति मर्यादाकरणार्थं 'विधिवत्' इति विशेषणम् इति प्रथमा व्याख्या। अथवा यथा देहलीस्था दीपिका उभयतोऽपि प्रकाशं वितनोति, एवम् 'विधिवत्' इत्येतद्विशेषणं मध्ये स्थितं सत् उभयतोऽपि व्याप्नोति। तेन पूर्वेऽपि विधिवदुपसन्ना एव विद्यां लब्धवन्त इति गम्यते इति द्वितीया व्याख्या। वक्ष्यन्ति हि 'गुरुमेवाभिगच्छेत्' (१-२-१२) इति ॥

4. 'उत्पत्तिं प्रलयं चैव भूतानामागतिं गतिम्। वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति ॥' (वि. पु. ६-५-७८) इति स्मरणात् सर्वज्ञतापादकविद्यावेत्तृत्वं 'भगवः' इति विशेषणादङ्गिरसो गम्यते ॥

## कस्मिन्नु इति पृष्टवतः शौनकस्याऽऽशयः

८. 'एकस्मिन् विज्ञाते[1] सर्वविद् भवति' इति शिष्टप्रवादं श्रुतवान् शौनकः। तद्विशेषं विज्ञातुकामः सन् कस्मिन्नु इति वितर्कयन् पप्रच्छ[2]। अथवा लोकसामान्यदृष्ट्या ज्ञात्वैव पप्रच्छ। सन्ति हि लोके सुवर्णादिशकलभेदाः सुवर्णत्वाद्येकत्वविज्ञानेन विज्ञायमाना लौकिकैः। तथा किं न्वस्ति सर्वस्य जगद्भेदस्य एकं कारणम्, यदेकस्मिन्[3] विज्ञाते सर्वम् (इदं) विज्ञातं भवतीति ॥

ननु अविदिते हि[4] 'कस्मिन्' इति प्रश्नोऽनुपपन्नः। 'किमस्ति तत्?' इति तदा प्रश्नो युक्तः। सिद्धे हि अस्तित्वे 'कस्मिन्' इति स्यात्। यथा 'कस्मिन् निधेयम्?' इति[5]। न। अक्षरबाहुल्यात् आयासभीरुत्वात् प्रश्नः संभवत्येव[6] 'कस्मिन्[7] विज्ञाते सर्ववित् स्यात्?' इति ॥ ३ ॥

1. 'ज्ञाते' इति 'वि'रहितः पाठोऽपि क्वचित्।

2. नु इत्यधिकावापः कृतोऽस्माभिः। इति वितर्कयन् इति वाक्यशेषबलात् त्रुटितमिदं लेखकप्रमादादित्युन्नीयते ॥ कोऽयं तत्त्वविशेषः स्यादिति वितर्कयन् तद्विजिज्ञासुः पप्रच्छेत्यर्थः ॥

3. यस्मिन्नेकस्मिन् इत्यर्थः ॥ 'यत्रैकस्मिन्' इति वा ॥

4. 'इति ह्यनुपपन्नः' इति व्युत्क्रमेण संबन्धः। इतो हिशब्दं विश्लिष्य वाक्यशेषगतेन इतिना संयोज्य 'इति हि तदा प्रश्नो युक्तः' इत्येवं युक्ततरः स्यादन्वयः कृतः ॥

5. अस्तित्वेन सिद्धेषु खलु बहुषु पेटिकाकरण्डकुण्डादिषु 'कस्मिन्नेतद्द्रव्यं निधेयम्?' इति प्रश्नः संभवति। असिद्धेऽज्ञाते तु कस्यचिदप्यस्तित्वे 'किमस्ति तादृशं वस्तु यस्मिन् विदिते सर्वं विदितं भवेत्?' इत्येव प्रष्टुं युक्तम् इति शङ्कितुरभिप्रायः ॥

6. त्वदुक्ताभिप्रायकमेवेदं प्रश्नवाक्यम्। 'किमस्ति तादृशम्' इत्यादिरूपेण प्रश्ने कृतेऽक्षरबाहुल्यं स्यादिति तद्वारणायेत्थं संक्षिप्तवाक्यं प्रयुक्तमित्यदोषः इत्यभिप्रायः ॥

7. 'किंत्वेकस्मिन्' इति वा ॥ 'किं न्वस्ति तद्यस्मिन्नेकस्मिन्' इति वा ॥ पाठद्वयमपि प्रकृताननुगुणमिति 'कस्मिन्' इत्येतावदत्र स्वीकृतमुपनिषदनुसारेण ॥

### परापरविद्याविभागः

**तस्मै स होवाच । द्वे विद्ये वेदितव्ये इति ह स्म यद्ब्रह्मविदो वदन्ति परा चैवापरा च ॥५॥**

#### अङ्गिरस उत्तरम्

९. तस्मै शौनकाय स[1] अङ्गिराः ह[2] किल उवाच। किमिति? उच्यते। द्वे विद्ये वेदितव्ये[3] इति। एवं ह स्म किल यद् ब्रह्मविदो वेदार्थाभिज्ञाः परमार्थदर्शिनः वदन्ति। के ते इति? आह। परा च परमात्मविद्या। अपरा च धर्माधर्मसाधनतत्फलविषया[4] ॥

#### प्रतिवचनसाङ्गत्योपपत्तिः

१०. ननु 'कस्मिन् विदिते सर्वविद्भवति?' इति शौनकेन पृष्टम्। तस्मिन् वक्तव्ये अपृष्टमाह अङ्गिराः 'द्वे विद्ये' इत्यादिना[5]। नैष दोषः। क्रमापेक्षत्वात् प्रतिवचनस्य। अपरा हि विद्या अविद्या। सा निराकर्तव्या। तद्विषये हि विदिते न किंचित् तत्त्वतो विदितं स्यादिति[6]। निराकृत्य हि पूर्वपक्षं पश्चात् सिद्धान्तो वक्तव्यो भवति इति न्यायात् ॥ ५ ॥

### अपरविद्यास्वरूपम्

**तत्रापरा ऋग्वेदो यजुर्वेदः सामवेदोऽथर्व-**

---

1. त्रुटितमिदं पदम् आ ॥
2. 'आह' इत्यपपाठः। ह इत्यस्य व्याख्यानं 'किल' इति ॥
3. एतदनन्तरं 'ज्ञातव्ये' इत्यधिकं वा ॥
4. धर्माधर्मेत्युपलक्षणमुपासनस्यापि। तस्याप्यपरविद्याविषयान्तर्गतत्वात् ॥
5. 'इत्यादि' इत्येव क्वचित्पाठः ॥
6. यद्यपि क्रियाकारकफलविवेकः प्रतिपाद्यत एवापरविद्यया, तथापि स विवेको न तात्त्विकविषयः। अविद्याकृतत्वात्। अतस्तद्विषये विदितेऽपि न किंचित्तत्त्वतो विदित स्यादिति परविद्यापेक्षया सा विद्या अविद्यैवेति भण्यते ॥

**वेदः शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति । .... ॥५॥**

साङ्गवेदा अपरविद्या

११. तत्र का अपरेति ? उच्यते । ऋग्वेदः, यजुर्वेदः, सामवेदः, अथर्ववेदः इत्येते चत्वारो वेदाः । शिक्षा, कल्पः, व्याकरणम्, निरुक्तम्, छन्दः, ज्योतिषम् इति अङ्गानि षट् । एषा अपरा विद्या[1] ॥

## परविद्यास्वरूपम्

**....अथ परा यया तदक्षरमधिगम्यते ॥५॥**

**यत्तदद्रेश्यमग्राह्यमगोत्रमवर्ण-**
**मचक्षुःश्रोत्रं तदपाणिपादम् ।**
**नित्यं विभुं सर्वगतं सुसूक्ष्मं**
**तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः ॥६॥**

परप्राप्तिसाधनं परविद्या

१२. अथ इदानीम् इयं परा विद्या उच्यते । यया तत् वक्ष्यमाणम् अक्षरम् अधिगम्यते प्राप्यते । अभिपूर्वस्य गमेः प्रायशः प्राप्त्यर्थत्वात् । न च परप्राप्तेः अवगमार्थस्य (च) भेदोऽस्ति[2] । अविद्याया अपाय एव हि परप्राप्तिः[3], नार्थान्तरम् ॥

1. 'उक्ता' इत्यधिकं वा ॥

2. द्रष्टव्यमत्र 'ब्रह्मविदाप्नोति परम्' (तै. २-१) इति वाक्यगताप्नोतिपदव्याख्यानभाष्यम् ॥

3. ननु तथापि अवगमार्थः किं परित्यज्यते ? स न परित्यक्तः । यतोऽवगमोऽत्र अक्षरविषयकाविद्यानिवृत्तिमात्रम् । स्वयंप्रकाशे अक्षरे प्रमाणकृत्यान्तराभावात् । अविद्याया निवृत्तिरेव च परस्याक्षरस्य प्राप्तिः, न तु ततोऽर्थान्तरम् । प्राप्तुरात्मस्वात्तस्य अविद्यामात्रव्यवहितत्वात् । तस्मात्सूक्तमधिगमोऽत्र प्राप्तिरेवेति ॥

## परविद्याया वेदजन्यत्वान्न वेदबाह्यत्वम्

१२. ननु ऋग्वेदादिबाह्या तर्हि सा कथं परा विद्या स्यात्, मोक्षसाधनं च? 'या वेदबाह्याः स्मृतयः' (मनु. १२-९५)[1] इति हि स्मरन्ति। कुदृष्टित्वात् निष्फलत्वात् अनादेया स्यात्। उपनिषदां च ऋग्वेदादिबाह्यत्वं स्यात्[2]। ऋग्वेदादित्वे तु पृथक्करणम् अनर्थकम्[3]। अथ कथं परेति? न। वेद्यविषयविज्ञानस्य विवक्षितत्वात्। उपनिषद्-वेद्याक्षरविषयं हि विज्ञानम् इह परा विद्या इति प्राधान्येन विवक्षितम्, नोपनिषच्छब्दराशिः। वेदशब्देन तु सर्वत्र शब्दराशिर्विवक्षितः[4]। शब्दराश्यधिगमेऽपि यत्नान्तरमन्तरेण[5] गुर्वभिगमनादिलक्षणं वैराग्यं च नाक्षराधिगमः संभवतीति पृथक्करणं ब्रह्मविद्यायाः 'परा विद्या' इति कथनं च[6] ॥ ६ ॥

1. 'या वेदबाह्याः स्मृतयो याश्च काश्च कुदृष्टयः। सर्वास्ता निष्फलाः प्रेत्य तमोनिष्ठा हि ताः स्मृताः ॥' इति पूर्णं वाक्यम्। मुद्रितपुस्तकेषु क्वचित् श्लोकार्धः, क्वचिच्च पूर्णमेव वाक्यं दृश्यते ॥

2. विद्याया वेदबाह्यत्वे अनादेयत्वमिति न सा परा विद्या स्यात्। उपनिषद्वेद्यत्वाच्च तस्याः, उपनिषदां वेदबाह्यत्वं च प्रसजेत् इत्यर्थः ॥

3. वेदबाह्यत्वदोषप्रसङ्गवारणार्थमुपनिषदां वेदत्वमेव स्वीक्रियते चेत् मूले 'अथ' इति विद्यायाः पृथक्करणं व्यर्थं स्यात्। विद्याया अपि वेदान्तर्गतत्वात् इत्यर्थः ॥

4. तथा च उपनिषच्छब्दराशिर्वेद एव। विद्या तु अक्षराधिगमनी ततः पृथगेवेति फलतीति भावः ॥

5. उपनिषच्छब्दराश्यधिगमः स्वाध्यायाध्ययनविधिप्रयुक्तः। अक्षराख्य-परब्रह्माधिगमस्तु वैराग्यगुर्वभिगमनादिप्रयत्नान्तरसाध्य इत्यर्थः ॥

6. एतद्वाक्यं नास्ति वा ॥ अपेक्षितं तु 'अथ कथं परेति?' इति शङ्का-परिहारत्वेन। शब्दराश्यपेक्षया परत्वं विद्याया विवक्षितमित्यदोष इत्यर्थः ॥ 'अथ परा विद्या इति' इति वा ॥ पाठस्तु न मूलानुसारिप्रतीकग्राहीत्युपेक्ष्यः ॥

## परविद्याया अपरविद्यातो वैलक्षण्यम्

१४. यथा विधिविपये कर्त्राद्यनेककारकोपसंहारद्वारेण वाक्यार्थज्ञानकालादन्यत्र[1] अनुष्ठेयोऽर्थोऽस्ति अग्निहोत्रादिलक्षणः, न तथा इह परविद्याविपये[2]। वाक्यार्थज्ञानसमकाल एव तु पर्यवसितो भवति[3]। केवलशब्दप्रकाशितार्थज्ञानमात्रनिष्ठाव्यतिरिक्ताभावात्[4]। तस्मात् इह परां विद्यां सविशेषणेन[5] अक्षरेण विशिनष्टि 'यत्तदद्रेश्यम्' इत्यादिना ॥

## सङ्ग्रहेणाक्षरवर्णनम्

१५. वक्ष्यमाणं बुद्धौ संहृत्य सिद्धवत् परामृश्यते—यत्तदिति। अद्रेश्यम् अदृश्यम्। सर्वेषां[6] बुद्धीन्द्रियाणमगम्यम् इत्येतत्। दृशे[7]र्बहिः-प्रवृत्तस्य पञ्चेन्द्रियद्वारकत्वात्। अग्राह्यं कर्मेन्द्रियाविपयम् इत्येतत्।

1. 'अन्यत्र काले कर्त्राद्युपसंहारद्वारेण अनुष्ठेयमस्ति'– इति योजना ॥

2. 'अनुष्ठेयोऽर्थोऽस्ति' इत्यनुपज्ञः ॥

3. चक्षुरालोकसंयोगसमकाले तमोनिवृत्त्या रूपाभिव्यक्तिर्यथा तथा वाक्यादक्षरज्ञानोदयसमकालमेव अविद्याद्यपगमः परिसमाप्तो भवति ; न तद्व्यतिरिक्तं यत्नान्तरं कर्तव्यमवशिष्यते परप्राप्त्यै इत्यर्थः ॥

4. कर्मज्ञानोदयानन्तरं तदनुष्ठानमपेक्षते स्वर्गादिफलप्राप्तिः। भविष्यत्काले प्राप्यत्वात् स्वर्गादेः फलस्य। अक्षरप्राप्तिस्तु परविद्याफलं न भव्या। भूतत्वात् जिज्ञासोरात्मत्वेनाक्षरस्य नित्यप्राप्तत्वात् अविद्यामात्रव्यवहितत्वाच्च। अतो ज्ञान-मात्रमपेक्षते सा न त्वनुष्ठानान्तरम् इति भावः। सू. भा. १–१–१, गी. भा. २–२१.

5. सविशेषणेन अदृश्यत्वादिविशेषणयुक्तेनाक्षरेण विशिनष्टि, अपर-विद्यातो विलक्षणां विभिज्य दर्शयतीत्यर्थः। एवं च अविद्याकल्पितविषया, फल जनने अनुष्ठानापेक्षा, भाविफला चापरा विद्या वेदाक्षराधिगममात्रजन्या। यथाभूत-विषया, फलजनने अनुष्ठानान्तरानपेक्षा, अविद्यामात्रव्यवहितभूतफला, वेदाक्षराधि-गमव्यतिरेकेण स्वोत्पत्तौ गुर्वभिगमनवैराग्याद्यधिकयत्नापेक्षिणी च परविद्येति महद्वैलक्षण्यं वैदिकत्वसाम्येऽप्युभयोर्विद्ययोरित्युक्तं भवति ॥

6. न केवलं चक्षुपः ॥

7. दृशेरिति वृत्तिज्ञानस्येत्यर्थः ॥

अगोत्रम्। गोत्रम् अन्वयः मूलम् इत्यनर्थान्तरम्। अगोत्रम् अनन्वयम् इत्यर्थः। न हि तस्य मूलम्[1] अस्ति येन अन्वितं स्यात्। वर्ण्यन्त इति वर्णाः द्रव्यधर्माः स्थूलत्वादयः[2]। शुक्लत्वादयो वा[3]। अविद्यमाना वर्णा यस्य तत् अवर्णम् अक्षरम्। अचक्षुःश्रोत्रम्। चक्षुश्च श्रोत्रं च नामरूपविषये करणे सर्वजन्तूनाम्। ते अविद्यमाने यस्य तत् अचक्षुःश्रोत्रम्। 'यः सर्वज्ञः सर्ववित्' (१-१-९) इत्यादिचेतनावत्त्वविशेषणात्[4] प्राप्तं संसारिणामिव चक्षुःश्रोत्रादिभिः करणैरर्थसाधकत्वम्। तदिह 'अचक्षुःश्रोत्रम्' इति वार्यते। 'पश्यत्यचक्षुः स शृणोत्यकर्णः' (श्वे. ३-१९) इत्यादिदर्शनात्[5]। किं च तदपाणिपादम्। कर्मेन्द्रियरहितम् इत्येतत्। यत एवम् अग्राह्यमग्राहकं च[6] अतो नित्यमविनाशि[7]। विभुं विविधं ब्रह्मादिस्थावरान्तप्राणिभेदैर्भवति इति विभुम्। सर्वगतं व्यापकम् आकाशवत्[8]। सुसूक्ष्मं शब्दादिस्थूलत्वकारणरहितत्वात्। शब्दादयो हि आकाशवाय्वादीनाम् उत्तरोतरं स्थूलत्वकारणानि[9]। तदभावात् सुसूक्ष्मम्। किं च तदव्ययम्। उक्तधर्मत्वादेव न व्येति इत्यव्ययम्। न हि अनङ्गस्य स्वाङ्गापचयलक्षणो व्ययः संभवति शरीरस्येव। नापि कोशापचयलक्षणो[10]

---

1. कारणम्।
2. द्रव्यधर्माः। अतो न द्रव्यमिति भावः॥
3. वर्णाः। वा शब्दश्चार्थे॥
4. 'विशेषणत्वात्' श्रा॥ इत्यतो वरीयानयं पाठः॥
5. अनावरणज्ञानस्वरूपत्वात् संसारिचेतनानामिव नास्ति ज्ञानसाधनापेक्षेत्यर्थः॥ सू. भा. १-१-५.
6. करणैर्न गृह्णाति, न च तैर्गृह्यत इत्यर्थः॥
7. ग्राह्याणां सविकारित्वात्, ग्राहकाणां च विषयोपभोगेन क्षयिष्णुत्वात् अनित्यत्वम्। न त्वेतदक्षरं तथेत्यर्थः॥
8. यथाकाशः सकलस्वकार्यरूपेणापि भवति, तद्व्यापकं च तद्वत्॥
9. का. भा. १-३-१५.
10. आत्मीयापचयलक्षण इत्यर्थः॥

व्ययः संभवति राज्ञ इव। नापि गुणद्वारको व्ययः संभवति। अगुणत्वात्, सर्वात्मकत्वाच्च[1]। यदेवंलक्षणं[2] भूतयोनिं भूतानां कारणं[3], पृथिवीव स्थावरजङ्गमानां परिपश्यन्ति सर्वतः आत्मभूतं सर्वस्य अक्षरं पश्यन्ति धीरा धीमन्तः, विवेकिनः। ईदृशम् अक्षरं यया विद्यया अधिगम्यते सा परा विद्या इति समुदायार्थः ॥ ६ ॥

**यथोर्णनाभिः सृजते गृह्णते च**
**यथा पृथिव्यामोषधयः संभवन्ति।**
**यथा सतः पुरुषात् केशलोमानि**
**तथाक्षरात्संभवतीह विश्वम् ॥ ७ ॥**

### अक्षरमद्वितीयमेव जगत्कारणम्

१६. भूतयोनि[4]रक्षरमित्युक्तम्। तत्कथं[5] भूतयोनित्वमिति ? उच्यते प्रसिद्धदृष्टान्तैः[6]—

यथा लोके प्रसिद्धम्[7], ऊर्णनाभिः लूताकीटः किञ्चित् कारणान्तरम्

1. गुणानामप्यात्मत्वात् तद्व्यापकमिति कृत्वा द्रष्टव्यं गी. भा. २-१७, १३-३१ इत्यादिस्थलेष्वव्ययनिर्वचनम् ॥

2. एवंजातीयकसर्वविशेषरहितम् इत्यर्थः। बृ. क. तै. आदिषु यानि यानि प्रतिषेधरूपाणि विशेषणानि श्रूयन्ते तानि सर्वाण्यपि अत्रावरोद्धव्यानीति भावः। सू. भा. ३-३-३३.

3. अत्रोक्तोऽदृश्यत्वादिगुणको भूतयोनिः परमात्मैव न शारीरः प्रधानं वेति निर्णीतं शारीरके। (सू. भा. १-२-२१, २२, २३.)

4. 'भूतयोनिं' इत्यतोऽयमेव वरीयान् पाठः ॥

5. तत् तत्रेत्यर्थः ॥

6. यद्यपि दृष्टान्तैरेव न वस्तुसिद्धिर्भवति, तथापि विवक्षितवस्तुविशदीकरणार्थं दृष्टान्ता आदीयन्त इति ज्ञेयम् ॥

7. 'प्रसिद्धः' इति पाठे ऊर्णनाभिरेक एव गृहीतः स्यात्। 'प्रसिद्धम्' इति (आ॥) पाठे तु यथा इत्यस्य लोके प्रसिद्धमेतदिति व्याख्यानं सर्वत्रान्वेति ॥

अनपेक्ष्य[1] स्वयमेव सृजते स्वशरीराव्यतिरिक्तानेव[2] तन्तून् बहिः प्रसारयति । पुनस्तानेव गृह्णते च गृह्णाति ( च ) स्वात्मभावमेवाऽऽपादयति[3] । यथा च पृथिव्याम् ओषधयः व्रीह्यादिस्थावराणि[4] इत्यर्थः । स्वात्माव्यतिरिक्ता एव (संभवन्ति) प्रभवन्ति[5] । यथा च सतः विद्यमानात् जीवतः[6] पुरुषात् केशलोमानि केशाश्च लोमानि च संभवन्ति[7] विलक्षणानि । यथा एते दृष्टान्ताः, तथा विलक्षणं सलक्षणं[8] च निमित्तान्तरानपेक्षात्[9] यथोक्तलक्षणात्[10] अक्षरात् संभवति समुत्पद्यते

1. निमित्तकारणमनपेक्ष्य ।

2. अक्षरं ब्रह्मैव निमित्तकारणं उपादानकारणं च जगत इत्येतत् निर्णीतं प्रकृत्यधिकरणे सू. भा. १-४-२३ प्रभृति १-४-२७ पर्यन्तम् ; परिहृताश्च तस्याद्वितीयस्यैव कारणत्वे आक्षेपाः (सू. भा. २-१-२४ प्रभृति २-१-२९, पर्यन्तम् ) उपसंहारदर्शनकृत्स्नप्रसक्त्यधिकरणयोः ॥

3. यद्यप्यक्षरं परमार्थदृष्ट्या अजाद्वयस्वरूपेणैव तिष्ठति नित्यदा । तथापि नामरूपात्मकं विश्वमक्षरात्मतामजहदेवाविद्यादृष्ट्या व्याक्रियते सृष्टिकाले ।। प्रलयकाले पुनरक्षरात्मभावमेवापद्यते- इत्येतदंशे दृष्टान्तः 'सृजते गृह्णते चेति' ॥

4. 'स्थावरान्तानि' इत्यसाधुः पाठः । उपलक्षणमेतत् जङ्गमानामपि ॥

5. 'स्वात्माव्यतिरिक्ता एव' इति कार्यस्य कारणादनन्यत्वं सूच्यते (सू.भा. २-१-१४) । 'संभवन्ति' इति मूलं लेखकप्रमादेन त्रुटितमित्यनुमीयते । प्रभवन्तीति प्रमादात् तत्स्थाने लिखितमिति वा ॥

6. तदेतत् सत्कार्यवादसूचकम् । द्र. गौ. का. भा. ३-२७,२८.

7. इत्यनुषङ्ग इति भावः ॥

8. नायं नियमः कारणसलक्षणमेव कार्यमिति विलक्षणमप्युत्पद्यत एवेत्येतन्निर्णीतं (सू. भा. २-१-६) शारीरके ॥

9. अभिन्ननिमित्तोपादानात् इत्यर्थः ॥

10. निषिद्धसर्वविशेषादपीत्यर्थः ॥

इह संसारमण्डले[1] विश्वं समस्तं[2] जगत् । अनेकदृष्टान्तोपादानं तु सुखावबोधनार्थम्[3] ॥ ७ ॥

## तपसा चीयते ब्रह्म
## ततोऽन्नमभिजायते ।
## अन्नात्प्राणो मनः सत्यं
## लोकाः कर्मसु चामृतम् ॥ ८ ॥

सृष्टौ क्रमः

१७. यद् ब्रह्मण उत्पद्यमानं विश्वम्, तदनेन क्रमेण उत्पद्यते, न युगपद्बदरमुष्टिप्रक्षेपवत्[4], इति क्रमनियमविवक्षार्थोऽयं[5] मन्त्रः आरभ्यते ॥

तपसा ज्ञानेन[6] उत्पत्तिविधिज्ञतया[7] भूतयोनिरक्षरं[8] ब्रह्म चीयते

---

1. मायिकमेवेदं जन्म जगतः। ततो न कारणात्मना हीनं जगत् प्रागुत्पत्तेरिदानीं वाऽस्तीति भावः ॥ सू. भा. २-१-७.

2. अनेकरूपेण विभक्तविचित्ररूपेण परिदृश्यमानमित्यर्थः ॥ सू. भा. २-१-२३.

3. 'सुखार्थप्रबोधनार्थम्' इत्यतो ज्यायानयं (वा ॥) पाठः ॥

4. प्रक्षिप्ताद्बदरमुष्टेर्यथा युगपद्बदराङ्कुरा जायेरन् न तथेत्यर्थः ॥

5. यद्यप्यविद्याविषय एवेयं जगदुत्पत्तिः (भा. भा. ४०), तथा च न क्रमापेक्षा सृष्टेः, तथापि सृष्टिरेवंक्रमेण सुप्रतिपद्या भवतीति प्रतिपत्तिक्रमार्थोऽयं क्रमोपदेशः। यद्यपि सृष्ट्यादिप्रपञ्चो न प्रतिपिपादयिषितः आत्मैकत्वप्रतिपत्त्यवतारोपायमात्रत्वात् (सू. भा. १-४-१४), तथाप्युपासकानां लयचिन्तनादिषु प्रयोजनार्थं श्रुत्यर्थनिर्मलत्वाय च क्रमो विचिन्तितः शारीरके (सू.भा.२-३-१...)। प्रकृतश्रुतौ क्रमनियमविवक्षा विद्यत इत्युक्तमत्र भाष्ये । सू.भाष्ये तु (सू.भा. २-३-१५) आम्नायक्रममात्रमित्युक्तं तु मन्त्रान्तर(२-१-३)विषयम् । सृष्टिक्रमविषये विशेषस्तु तैत्तिरीयभाष्यार्थविमर्शिनीतोऽधिगन्तव्यः ॥

6. तै.भा. २-६. 7. उत्पत्तिप्रकारज्ञानवत्तयेत्यर्थः ॥

8. 'भूतयोन्यक्षरम्' इत्येतदेवं विपरिवर्तितम् ॥

उपचीयते उत्पिपादयिषत् इदं जगत् अङ्कुरमिव बीजम् उच्छूनतां गच्छति पुत्रमिव पिता[1] हर्षेण। एवं सर्वज्ञतया सृष्टिस्थितिसंहारशक्तिविज्ञान-वत्तया[2] उपचितात् ततो ब्रह्मणः अन्नम्— अद्यते भुज्यते इति अन्नम्— अव्याकृतम् साधारणं[3] संसारिणां व्याचिकीर्षितावस्थारूपेण अभिजायते उत्पद्यते[4]। ततश्चाव्याकृतात् व्याचिकीर्षितावस्थातोऽन्नात् प्राणः हिरण्य-गर्भः, ब्रह्मणो ज्ञानक्रियाशक्त्यधिष्ठितः[5], जगत्साधारणः, अविद्याकामकर्म-भूतसमुदायबीजाङ्कुरो[6] जगदात्मा अभिजायते इति अनुषङ्गः। तस्माच्च प्राणात् मनः मनआख्यं सङ्कल्पविकल्पसंशयनिर्णयाद्यात्मकम् अभि-जायते[7]। ततोऽपि सङ्कल्पाद्यात्मकात् मनसः सत्यम् सत्याख्यम्[8] आकाशादिभूतपञ्चकम् अभिजायते। तस्मात् सत्याख्यात् भूतपञ्चकात्

---

1. उपादानकारणविषये बीजदृष्टान्तः, निमित्तकारणविषये च पितृदृष्टान्तः॥

2. 'तपसा' इत्यत्र सर्वज्ञत्वमुपलक्षणं सर्वशक्तित्वस्यापीति भावः॥

3. नामरूपयोः प्रागवस्थारूपम् अविद्याकल्पितं भूतसूक्ष्ममीश्वराश्रयम् अव्याकृतमुच्यते। तदेव च शक्तिः बीजम्, माया, अव्यक्तम् इत्यादिशब्दवाच्यम्। तच्च शरीरादिरूपेण परिणममानं सर्वैः प्राणिभिरुपभुज्यत इत्यन्नशब्देनोक्तमित्यर्थः। सू. भा. १-४-२,३; २-१-१४.

4. 'तस्मादव्यक्तमुत्पन्नम्' (मो. ध. ३३४-३१) इति स्मृत्युक्तदिशा व्याचिकीर्षितावस्थापत्तिरेवाव्याकृतस्योत्पत्तिः। न ह्यविद्याकल्पितम् ऋते विद्यां विनश्येत्, प्रतिकल्पमभिनवमुत्पद्येत वेति। अत एव च संसारस्यानादित्वाभ्युप-गमः॥ सू. भा. २-१-३६, ४-२-८.

5. 'अधिष्ठितजगत्साधारणः' (आ॥) इत्यतोऽयमेव साधीयान् पाठः। ब्रह्मण एव ज्ञानक्रियाशक्तिभ्यामधिष्ठितो हिरण्यगर्भ इत्यर्थः॥

6. भूतसमुदायस्य बीजमव्याकृतम्, तदङ्कुरो हिरण्यगर्भः। तत एव हि संसारवृक्षोद्भव इति॥

7. हिरण्यगर्भ इति तदुपाधिभूतं महत्तत्त्वमुक्तम्। मन इत्यहङ्कारतत्त्व-मुच्यते॥

8. भूतपञ्चकस्य सत्यमिति नाम। तत्प्रवृत्तिनिमित्तं द्रष्टव्यं बृहदारण्यके २-३-१, २,३.

अण्डक्रमेण[1] सप्तलोका भूरादयः। तेषु मनुष्यादिप्राणिवर्णाश्रमक्रमेण कर्माणि। कर्मसु च निमित्तभूतेषु[2] अमृतं कर्मजं फलम्। यावत् कर्माणि कल्पकोटिशतैरपि न विनश्यन्ति[3], तावत् फलं न विनश्यति इति अमृतम् ॥ ८ ॥

**यः सर्वज्ञः सर्ववि-**
**द्यस्य ज्ञानमयं तपः।**
**तस्मादेतद्ब्रह्म नाम**
**रूपमन्नं च जायते ॥ ९ ॥**

**परविद्योपसंहारः**

१८. उक्तमेवार्थम् उपसंजिहीर्षुर्मन्त्रः वक्ष्यमाणार्थमाह[4] ॥

य उक्तलक्षणः अक्षराख्यः सर्वज्ञः। सामान्येन सर्वं जानातीति[5] सर्वज्ञः। विशेषेण सर्वं वेत्तीति सर्ववित्[6]। यस्य ज्ञानमयं ज्ञानविकारमेव[7]

1. छां. ३-१९-१, बृ. १-२-२.

2. कर्मसु इति सप्तमी निमित्तार्थे प्रोक्तेति भावः ॥

3. 'नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि' ( ? ) इति स्मृतिसूचनमिदम्। ननु फलं कारकनिष्पन्नं सत्फल्गुतया लयं गच्छतीति प्रसिद्धम् (गी. भा. १८-१२) तत्कथममृतं भवेदित्याशङ्क्य, व्यवहारदृष्ट्या नाभुक्तं क्षीयत इत्यमृतमुच्यत इत्यदोष इत्युक्तम् ॥

4. समासेनोक्तस्य परापरविद्यास्वरूपस्य प्रपञ्चनार्थम् ॥

5. स्वरूपचैतन्येन सामान्येन सर्वं विषयीकरोतीति ॥

6. विज्ञानात्मरूपेण पदार्थान् पश्यामि, शृणोमि इत्यादिप्रकारेण विशेषतया विजानातीति ॥

7. अत्र ज्ञानविकारमेवेत्यत्र विकारार्थत्वे न निर्भरः। ज्ञानविकारभूतमिव ज्ञानमयम्। बिलात् सर्पस्य निर्गमने यथा सूर्यस्तं प्रकाशयतीत्युच्यते, एवं सर्वं जानातीत्यपि बोद्धव्यम् ॥ तै. भा. २-६ 'स तपोऽतप्यत' इत्यस्य व्याख्यानं द्रष्टव्यम् ॥

सार्वज्ञ्यलक्षणं तपः नायासलक्षणम्[1] । तस्मात् यथोक्तात्[2] सर्वज्ञात् एतद् उक्तं कार्यलक्षणं ब्रह्म हिरण्यगर्भाख्यं जायते। किं च नाम 'असौ देवदत्तः, यज्ञदत्तः' इत्यादिलक्षणम्[3] । रूपम् इदं शुक्लं नीलम् इत्यादि । अन्नं च व्रीहियवादिलक्षणं जायते। पूर्वमन्त्रोक्तक्रमेण— इत्यविरोधो द्रष्टव्यः ॥ ९ ॥

इत्याथर्वणमुण्डकोपनिषद्भाष्ये प्रथममुण्डके प्रथमः खण्डः

1. न कृच्छ्रचान्द्रायणादिरूपम् 'अनायासलक्षणम्' इति तु पा ॥ ; तदपेक्षया अयमेव स्पष्टतरः पाठः ॥

2. अदृश्यत्वादिगुणकात् ॥

3. न केवलं संज्ञानामान्येव, यावद्, घटपटादिनामान्यपि अत्र ग्राह्याणि ॥

# प्रथममुण्डके - द्वितीयः खण्डः

## ग्रन्थसंबन्धः

१९. साङ्गा वेदाः अपरा विद्या उक्ता 'ऋग्वेदो यजुर्वेदः' (१–१–५) इत्यादिना। 'यत्तदद्रेश्यम्' (१–१–६) इत्यादिना 'नामरूपमन्नं च जायते' (१–१–९) इत्यन्तेन ग्रन्थेन उक्तलक्षणम्[1] अक्षरं यया विद्यया अधिगम्यते (१–१–५) इति परा विद्या सविशेषणा[2] उक्ता। अतः परम् अनयोर्विद्ययोर्विषयौ विवेक्तव्यौ संसारमोक्षौ इति उत्तरो ग्रन्थ आरभ्यते ॥

## अपरविद्याविषय एव तावत्प्रदर्श्यते

२०. तत्र अपरविद्याविषयः कर्त्रादिसाधनक्रियाफलभेदरूपः संसारः, अनादिरनन्तः, दुःखस्वरूपत्वात् हातव्यः प्रत्येकं[3] शरीरिभिः सामस्त्येन[4] नदीस्रोतोवदविच्छेदरूपसंबन्धः[5] । तदुपशमलक्षणो मोक्षः

1. अदृश्यत्वादिगुणकं समस्तजगत्कारणमिति वर्णितरूपम् ॥

2. अक्षररूपविशेषणयुक्ता, तदधिगमयितृत्वात् तस्याः ॥

3. प्रत्येकं हातव्यः। अविद्यामात्रकल्पितत्वात्, अविद्याप्रहाणं विना तस्य हानानुपपत्तेः, अविद्यायाश्च प्रतिपुरुषं कल्पितत्वादित्यर्थः। न पुनरुपादानभूता आत्माश्रिता काचिदविद्याऽत्र स्वीकर्तव्या। तादृश्या एकपुरुषेण प्रहीणाया सावशेषत्वानुपपत्तेः। द्रष्टव्यं सू. भा. ३–२–२१ 'एकेन चादिमुक्तेन' इत्यादि भाष्यम्। प्रतिपुरुषं परिसमाप्तं शास्त्रम् इति च न्यायः। बृ.भा. ५–१–१.

4. आत्यन्तिकत्वेनेत्यर्थः। सुषुप्तादौ लीनाया अपि पुनरात्मलाभदर्शनात् ॥

5. 'अव्यवच्छेदरूपसंबन्धः' इति भा॥ अत्र संबन्धो नामाविरतप्रबन्धलक्षणो बन्धः ॥

परविद्याविषयः, अनाद्यनन्तोऽजरोऽमरोऽमृतोऽभयः[1] शुद्धः प्रसन्नः स्वात्मप्रतिष्ठालक्षणः[2] परमानन्दोऽद्वय[3] इति । पूर्वं तावदपरविद्याया[4] विषयप्रदर्शनार्थमारम्भः । तद्दर्शने हि तन्निर्वेदोपपत्तिः[5] । तथा च वक्ष्यति 'परीक्ष्य लोकान् कर्मचितान्' (१-२-१२) इत्यादिना[6] । न हि अप्रदर्शिते परीक्षा उपपद्यते इति तत्प्रदर्शयन् आह–

## अपरविद्याविषयः – कर्म

**तदेतत्सत्यं मन्त्रेषु कर्माणि कवयो यान्यपश्यं-**
**स्तानि त्रेतायां बहुधा संततानि ।**
**तान्याचरथ नियतं सत्यकामाः**
**एष वः पन्थाः सुकृतस्य लोके ॥ १ ॥**

**कर्ममार्गः**

२०. तदेतत् सत्यम् अवितथम् । किं तत् ? मन्त्रेषु ऋग्वेदा-

---

1. ब्रह्मैव हि मुक्त्यवस्था । ब्रह्म चानाद्यनन्ताजरामरादिस्वभावम् । बृ. ४-४-२५ । अत्र कालातीतब्रह्माव्यतिरेकात् मोक्षस्यानाद्यनन्तत्वम् । संसारस्य तु अविद्याप्रत्युपस्थापितत्वात् यावदविद्याबाधमनाद्यनन्तत्वं द्रष्टव्यम् ॥ सू. भा. २-१-३६ ; गी. भा. १५-३.

2. अविद्यायाः प्रहाणे सति स्वात्मन्यवस्थानं मोक्षः । एतदेव प्रत्यगात्मस्वरूपावस्थानम् का.भा. २-१-२ ; स्वरूपावस्थानम् सू. भा. ४-३-१४, गी.भा. १८-६६. इति च व्यपदिश्यते ॥

3. स्वात्मप्रतिष्ठालक्षण एवायमानन्दः । परमात्मनो नित्यपरमानन्दरूपत्वात् । न पुनः संवेद्यानन्दोऽत्र विवक्षितः ॥ बृ. भा. ३-९-२८ ७.

4. 'अपरविद्याविषय' इति समस्तपाठोऽपि क्वचित् ॥

5. 'तन्निर्वेदोपपत्तेः' इति (आ ॥) पाठापेक्षया एष एव प्रथमान्तपाठ आञ्जसः ॥

6. 'ब्राह्मणो निर्वेदमायात्' इति हि तत्र वाक्यशेषः ॥

ह्याख्येषु कर्माणि अग्निहोत्रादीनि मन्त्रैरेव प्रकाशितानि[1] कवयः मेधाविनो[2] वसिष्ठादयः यानि अपश्यन् दृष्टवन्तः। यत् तदेतत् सत्यम्। एकान्तपुरुषार्थसाधनत्वात्[3]। तानि च वेदविहितानि[4] ऋषिदृष्टानि कर्माणि त्रेतायां त्रयीसंयोगलक्षणायां[5] हौत्राध्वर्यवौद्गात्रप्रकारायाम्[6] अधिकरणभूतायाम् बहुधा बहुप्रकारं संततानि प्रवृत्तानि कर्मिभिः क्रियमाणानि। त्रेतायां वा युगे[7] प्रायशः प्रवृत्तानि। अतो यूयं तानि आचरथ निर्वर्तयत[8] नियतं नित्यं सत्यकामाः यथाभूत[9]कर्मफलकामाः[10] सन्तः। एष वः युष्माकं पन्थाः मार्गः सुकृतस्य स्वयं निर्वर्तितस्य[11] कर्मणः लोके फलनिमित्तम्[12]। लोक्यते दृश्यते भुज्यते इति कर्मफलं लोक उच्यते।

---

1. मन्त्रप्रकाशितमेव हि कर्म ब्राह्मणेन विधीयते॥ छां. ७-४-१.

2. क्रान्तदर्शिन ऋषयः॥

3. नियमेन तत्तत्फलदायकत्वात्, न तु अबाध्यमानत्वात्। दृष्टं हि कर्मफलस्य अनित्यत्वम् इति भावः॥

4. ब्राह्मणविहितानि॥

5. ऋग्वेदादित्रयविहितत्वमेव त्रेताशब्दस्यार्थ इति भावः॥

6. ऋग्वेदयजुर्वेदसामवेदविहितायां यथाक्रमं हौत्रादिप्रकारायामित्यर्थः॥

7. 'ध्यायन्कृते यजन्यज्ञैस्त्रेतायां द्वापरेऽर्चयन्' इति (वि.पु. ६-२-१७) पुराणस्मृतिमवलम्ब्य व्याख्यानमिदम्। अन्यत्रापि युगे प्रवृत्तिदर्शनात् 'प्रायशः' इत्युक्तिः॥

8. आचरत इति लकारव्यत्ययेन बोध्यमिति भावः। निर्वर्तयथ इत्यपि पाठः क्वचित्॥

9. यथाभूतेति अवश्यंभावीत्यर्थः। 10. न तु मोक्षकामाः॥

11. स्वयं कृतं हि सुष्ठु भवति न भृत्यादिकृतमित्यत एवं निर्वचनम्। तै. भा. २-७, (सुकृतमुच्यते) ऐ. भा. १-२-३, (सुकृतं बत)- अत्र सुकृतशब्दस्य निर्वचनं द्रष्टव्यम्॥

12. लोके इति निमित्तार्थे सप्तमी इति भावः॥

तदर्थं तत्प्राप्तये एष मार्ग इत्यर्थः । यानि एतानि अग्निहोत्रादीनि त्रय्यां विहितानि कर्माणि तानि एष पन्था अवश्यफलप्राप्तिसाधनम् इत्यर्थः[1] ॥

**यदा लेलायते ह्यर्चिः**
**समिद्धे हव्यवाहने ।**
**तदाऽऽज्यभागावन्तरे-**
**णाहुतीः प्रतिपादयेत् ॥ २ ॥**

२२. तत्र अग्निहोत्रमेव तावत् प्रथमं प्रदर्शनार्थम्[2] उच्यते । सर्वकर्मणां प्राथम्यात् । तत्कथम्? यथैव इन्धनैरभ्याहितैः सम्यगिद्धे[3] समिद्धे दीप्ते[4] हव्यवाहने लेलायते चलति अर्चिः, तदा तस्मिन् काले लेलायमाने चलति अर्चिषि आज्यभागौ आज्यभागयोः[5] । अन्तरेण मध्ये आवापस्थाने[6] आहुतीः प्रतिपादयेत् प्रक्षिपेत् देवताम् उद्दिश्य । अनेकाहप्रयोगापेक्षया[7] आहुतीः इति बहुवचनम् ॥

---

1. 'सुकृतस्य लोके' इत्येतदेव गमकं 'तदेतत्सत्यम्' इत्यस्य नियतफल-दायकत्वमेवार्थ इत्यस्य । आपेक्षिकसत्यं प्रदर्श्य हि निरपेक्षसत्यं प्रतिपादनीयमिति 'तदेतत्सत्यम्' इत्यारम्भः ॥

2. उपलक्षणार्थम् ॥

3. 'समिद्धे' इत्यस्यानन्तरं पठितव्यमिदम् ॥

4. 'दीप्ते' इति नास्ति क्वचित् ॥

5. विभक्तिविपरिणामेन षष्ठी बोध्येति भावः ॥

6. आहवनीयस्य दक्षिणोत्तरपार्श्वयोराज्यभागौ हूयेते । अग्नये स्वाहा ! सोमाय स्वाहा ! इति दर्शपूर्णमासे । तयोर्मध्ये अन्ये यागा अनुष्ठीयन्ते । तन्मध्यम् आवापस्थानमुच्यते इति व्याख्याकारः ॥

7. अग्निहोत्राहुत्योर्द्वित्वं प्रसिद्धम् । 'सूर्याय स्वाहा ! प्रजापतये स्वाहा !' इति प्रातः । 'अग्नये स्वाहा ! प्रजापतये स्वाहा !' इति सायम् । तत्कथमग्निहोत्रं प्रक्रम्य 'आहुतीः' इति बहुवचनम्? तत्राह अनेकाहेति । अनेकेषु अहस्सु प्रयोगानु(गा अनु?)ष्ठानानि । तदपेक्षया इत्यर्थ इति टीका ॥

यस्याग्निहोत्रमदर्शमपौर्णमास-
मचातुर्मास्यमनाग्रयणमतिथिवर्जितं च ।
अहुतमवैश्वदेवमविधिनाहुत-
मासप्तमांस्तस्य लोकान् हिनस्ति ॥ ३ ॥

### कर्ममार्गे विपत्तयः

२३. एष सम्यगाहुतिप्रक्षेपादिलक्षणः कर्ममार्गो लोकप्राप्तये पन्थाः । तस्य च सम्यक्करणं दुष्करम् । विपत्तयस्तु अनेका भवन्ति । कथम्? यस्य अग्निहोत्रिणः अग्निहोत्रम् अदर्शं दर्शाख्येन कर्मणा वर्जितम् । अग्निहोत्रिणः[1] अवश्यकर्तव्यत्वाद्दर्शस्य अग्निहोत्रिसंबन्धि अग्निहोत्रविशेषणमिव भवति[2] । तदक्रियमाणम् इत्येतत् । तथा 'अपौर्णमासम्' इत्यादिष्वपि अग्निहोत्रविशेषणत्वं द्रष्टव्यम् । अग्निहोत्राङ्गत्वस्य[3] अविशिष्टत्वात् । अपौर्णमासं पौर्णमासकर्मवर्जितम् अचातुर्मास्यं चातुर्मास्यकर्मवर्जितम् । अनाग्रयणम् । आग्रयणम् शरदादिषु[4] कर्तव्यम् । तच्च न क्रियते यस्य[5] । तथा अतिथिवर्जितं च । अतिथिपूजनं च अहन्यहनि अक्रियमाणं यस्य । स्वयं सम्यगग्निहोत्रकाले अहुतम् । अदर्शादिवत्[6] अवैश्वदेवम् । वैश्वदेवकर्म-

1. 'अग्निहोत्रिभिः' इति वा ॥

2. अग्निहोत्रिभिः संबद्धत्वात् तद्द्वारेण अग्निहोत्रविशेषणमिव प्रकल्प्य अग्निहोत्रम् 'अदर्शपौर्णमासम्' इत्यादिभिर्विशेष्यते इत्यर्थः ॥

3. 'अग्निहोत्राङ्गत्वस्य' इति मुद्रितपुस्तकेष्वपपाठः । अनङ्गस्य हि दर्शपौर्णमासादेः अग्निहोत्रविशेषणत्वमिह दृश्यते ॥

4. शरदादिषु इति । 'शरदादिषु नूतनान्नेन कर्तव्यमाग्रयणं कर्म' इति टीका । आग्रयणं शरदि वसन्ते च कर्तव्यः कर्मविशेष इति नारायणः ॥

5. अग्निहोत्रस्येति शेषः । एवमुत्तरत्रापि । 'यस्य तत्' इत्यपि क्वचित् पाठः ॥

6. अहुतम् इत्यत्र यथा अग्निहोत्राङ्गस्यैवादानम् न तथा 'अवैश्वदेवम्' इत्यत्र, किं तु 'अदर्शम्' इत्यादाविव अनङ्गस्यैव विशेषणत्वेन ग्रहणमित्यर्थः ॥

वर्जितम् । हूयमानमपि अविधिना हुतम् अयथाहुतम्[1] । एवं दुःसंपादितम् असंपादितम्[2] अग्निहोत्राद्युपलक्षितं कर्म किं करोतीति ? उच्यते । आ सप्तमान् सप्तमसहितान् तस्य कर्तुः लोकान् हिनस्ति, हिनस्तीव आयासमात्रफलत्वात् । सम्यक् क्रियमाणेषु हि कर्मसु कर्मपरिणामानुरूपेण भूरादयः सत्यान्ताः सप्तलोकाः फलं प्राप्यन्ते[3] । ते लोका एवंभूतेन अग्निहोत्रादिकर्मणा तु अप्राप्यत्वात् हिंस्यन्त इव । आयासमात्रं तु अव्यभिचारि इत्यतो'हिनस्ति' इत्युच्यते । पिण्डदानाद्यनुग्रहेण वा संबध्यमानाः पितृपितामहप्रपितामहाः पुत्रपौत्रप्रपौत्राः स्वात्मोपकाराः[4] सप्तलोका उक्तप्रकारेण अग्निहोत्रादिना न भवन्ति इति हिंस्यन्ते इत्युच्यते[5] ॥ ३ ॥

काली कराली च मनोजवा च
सुलोहिता या च सुधूम्रवर्णा ।
स्फुलिङ्गिनी विश्वरुची च देवी
लेलायमाना इति सप्तजिह्वाः ॥ ४ ॥

एतेषु यश्चरते भ्राजमानेषु
यथाकालं चाहुतयो ह्याददायन् ।
तं नयन्त्येताः सूर्यस्य रश्मयो
यत्र देवानां पतिरेकोऽधिवासः ॥ ५ ॥

1. 'अयथाहुतम् इत्येतत्' वा ॥ अयथा इति विरुद्धप्रकारणार्थः ॥

2. अयथावत् सदोषं कृतं दुःसम्पादितम्, विधिवदकृतम् असम्पादितम्॥

3. 'प्राप्यते' 'प्राप्तव्यम्' इति पाठयोः फलस्य प्राधान्यं विवक्षितं वेदितव्यम् ॥

4. स्वात्मना क्रियमाणमुपकारं भजन्त इति स्वात्मोपकाराः ॥

5. उभयथापि इष्टप्राप्तिहानिरेव हिंसा विवक्षितेति भावः ॥

सम्यगाचरितस्य कर्मणः फलम्–

२४. काली कराली च मनोजवा च सुलोहिता या च सुधूम्रवर्णा। स्फुलिङ्गिनी विश्वरुची च देवी लेलायमाना इति सप्तजिह्वाः[1]। काल्याद्या विश्वरुच्यन्ताः लेलायमाना अग्नेः हविराहुतिग्रसनार्था एताः[2] सप्तजिह्वाः ॥

एतेषु अग्निजिह्वाभेदेषु योऽग्निहोत्री चरते कर्म आचरति अग्निहोत्रादि[3] भ्राजमानेषु दीप्यमानेषु यथाकालं च यस्य कर्मणो यः कालः, तं कालम् अनतिक्रम्य[4] यथाकालम्। यजमानं आददायन् आददानाः आहुतयः, यजमानेन निर्वर्तिताः तं नयन्ति प्रापयन्ति एता आहुतयः या इमा अनेन निर्वर्तिताः। सूर्यस्य रश्मयो भूत्वा। रश्मिद्वारैरित्यर्थः[5]। यत्र यस्मिन् स्वर्गे देवानां पतिरिन्द्रः एकः सर्वान् उपरि अधिवसति इति अधिवासः ॥ ४–५ ॥

**एह्येहीति तमाहुतयः सुवर्चसः**
**सूर्यस्य रश्मिभिर्यजमानं वहन्ति।**
**प्रियां वाचमभिवदन्त्योऽर्चयन्त्य**
**एष वः पुण्यः सुकृतो ब्रह्मलोकः ॥ ६ ॥**

कर्मणः स्वर्गः परमं फलम्

२५. कथं सूर्यस्य रश्मिभिर्यजमानं वहन्तीति? उच्यते। एहि! एहि! इति आह्वयन्त्यः तं यजमानं आहुतयः सुवर्चसः दीप्तिमत्यः।

1. एतदन्तं मन्त्र एव लेखकेन प्रमादात्पुनर्लिखित इत्युत्प्रेक्ष्यते। 'इति सप्तजिह्वाः' इत्यस्य स्थाने 'दहनस्य जिह्वाः' इति वा॥ वाक्यशेषे 'एताः किल सप्तजिह्वाः' इति च। क्वचित् अयं वाक्यशेषो नैव दृश्यते॥

2. अस्यानन्तरम् 'किल' इत्यधिकं वा॥

3. 'अग्निहोत्रादिकम्' इति वा॥　4. 'यः कालस्तत्कालम्' इति वा॥

5. न तु साक्षाद्रश्मय एव भूत्वा। वक्ष्यमाणेनैकवाक्यतायै एवं व्याख्यानम्॥

किं च प्रियाम् इष्टां वाचं स्तुत्यादिलक्षणाम् अभिवदन्त्यः उच्चारयन्त्यः, अर्चयन्त्यः पूजयन्त्यश्च 'एष वः युष्माकं पुण्यः सुकृतः पन्थाः[1] ब्रह्मलोकः फलरूपः।' एवं[2] प्रियां वाचमभिवदन्त्यो[3] वहन्तीत्यर्थः। ब्रह्मलोकः स्वर्गः प्रकरणात्[4] ॥ ६ ॥

केवलकर्मनिन्दा

**प्लवा ह्येते अदृढा यज्ञरूपा**
**अष्टादशोक्तमवरं येषु कर्म।**
**एतच्छ्रेयो येऽभिनन्दन्ति मूढा**
**जरामृत्युं ते पुनरेवापि यन्ति ॥ ७ ॥**

कर्मफलस्यानित्यत्वम्

२६. एतच्च ज्ञानरहितं[5] कर्म एतावत्फलम् अविद्याकाम(कर्म)कार्यम्[6] अतोऽसारं दुःखमूलम्[7] इति निन्द्यते[8] ॥

प्लवाः विनाशिन इत्यर्थः। हि यस्मात् एते अदृढाः अस्थिराः

1. 'एष वः पन्थाः' (१-२-१) इत्युक्तमत्र परामृश्यत इति भावः ॥
2. 'इत्थम्' इति पाठान्तरम् ॥
3. एवमभिवदन्त्यस्तं वहन्तीति संबन्ध इति भावः ॥
4. ब्रह्मलोकः इति महतः फलस्य वाचकः शब्दः। कर्मणस्तु निरतिशयमहत्फलं स्वर्गः; केवलकर्मणश्चेदं प्रकरणमिति ब्रह्मलोकशब्देन स्वर्गोऽत्र बोध्य इत्यभिप्रायः ॥
5. उपासनारहितम् ॥
6. यद्यपि मुद्रितपुस्तकेष्वयमेव पाठः, तथापि कर्मेति अधिकापाठो लेखकप्रमादकृत इत्यवसीयते। कर्मणः कर्मकार्यत्वानुपपत्तेः। कामप्रेरित एव हि करोति 'यद्यद्धि कुरुते जन्तुस्तत्तत्कामस्य चेष्टितम्' इति स्मृतेः ॥
7. यद्यपि कर्मणः स्वर्गादिसुखमेव फलम्, तथापि 'दुःखयोनय एव ते' (गी. ५-२२) इति गीतोक्तनीत्या दुःखकारणत्वाद्दुःखत्वमवसेयम् ॥
8. ज्ञानकर्मसमुच्चयफलस्य उत्कृष्टत्वप्रतिपादनार्थं न तु निन्दायां तात्पर्यमिति बोध्यम् ॥

यज्ञरूपाः यज्ञस्य रूपाणि यज्ञरूपा यज्ञनिर्वर्तकाः[1] । अष्टादश अष्टादश-सङ्ख्याकाः । षोडश[2] ऋत्विजः पत्नी यजमानश्च इति अष्टादश । एतदाश्रयं कर्म । उक्तं कथितं शास्त्रेण येषु अष्टादशसु अवरं[3] केवलं ज्ञान-वर्जितं कर्म । अतस्तेषाम् अवरकर्माश्रयाणाम् अष्टादशानां अदृढतया प्लवत्वात् प्लवते सह फलेन तत्साध्यं कर्म । कुण्डविनाशादिव क्षीर-दध्यादीनां तत्स्थानां नाशः[4] । यत एवम्, एतत्कर्म श्रेयः श्रेयःकरणम्[5] इति ये अभिनन्दन्ति अभिहृष्यन्ति अविवेकिनो[6] मूढाः, अतः[7] ते जरां च मृत्युं च जरामृत्युं कंचित्कालं स्वर्गे स्थित्वा पुनरेवापि यन्ति भूयोऽपि गच्छन्ति[8] ॥ ७ ॥

**अविद्यायामन्तरे वर्तमानाः**
**स्वयं धीराः पण्डितं मन्यमानाः ।**
**जङ्घन्यमाणाः परियन्ति मूढा**
**अन्धेनैव नीयमाना यथान्धाः ॥ ८ ॥**

1. यद्यपि कृष्णयजुषि एव यागस्य रूपे इति वदन्ति, तथापि रूप्यते तन्निर्वर्त्यतया निरूप्यते यज्ञ एभिरिति ऋत्विगादयो यज्ञरूपाणीति व्यपदिश्यन्त इति भावः ॥

2. ब्रह्मा, ब्राह्मणाच्छंसी, आग्नीध्रः, पोता, उद्गाता, प्रस्तोता, प्रतिहर्ता, सुब्रह्मण्यः, होता, मैत्रावरुणः, अच्छावाकः, ग्रावस्तुत्, अध्वर्युः, प्रतिप्रस्थाता, नेष्टा, उन्नेता- इति षोडश ॥

3. उपासनारहितत्वादनित्यफलकमिति उपासनासहितकर्मापेक्षया अवरम् ॥ गी. २-४९.

4. आश्रयनाशे आश्रितस्य तदवलम्बनस्य नाशो दृष्ट इति भावः । अष्टा-दशस्वाश्रयेषु अन्यतमेन न्यूनमपि कर्म प्लवते इत्यभिप्रायः ॥

5. 'श्रेयःसाधनम्' इति वा ॥

6. नित्यानित्यविवेकाभावात्, कर्मफलनित्यत्वभावनया मुग्धज्ञानाः ॥

7. विपरीतज्ञानप्रच्छिन्नत्वात्, अश्रेयःसाधनाभिनिविष्टत्वात् ॥

8. यत्र पूर्वं जरामृत्युमये संसारे स्थिताः तमेव भूयोऽपि गच्छन्ति । विपरीतज्ञानस्यानपोदितत्वादिति शेषः । गी. ९-२०, २१.

कर्मणोऽविद्याविषयत्वम्

२७. किं च अविद्यायाम् अन्तरे मध्ये वर्तमानाः अविवेकप्रायाः स्वयं वयमेव[1] धीमन्तः पण्डिताः विदितवेदितव्याश्च इति मन्यमानाः[2] आत्मानं संभावयन्तः, ते च जङ्घन्यमानाः जरारोगाद्यनेकानर्थव्रातैर्हन्यमानाः[3] भृशं[4] पीड्यमानाः परियन्ति विभ्रमन्ति मूढाः । दर्शनविवर्जितत्वात्[5] अन्धेनैव अचक्षुष्केणैव नीयमानाः प्रदर्श्यमानमार्गाः, यथा लोके अन्धा अक्षिरहिता गर्तकण्टकादौ पतन्ति तद्वत्[6] ॥ ८ ॥

**अविद्यायां बहुधा वर्तमाना**
**वयं कृतार्था इत्यभिमन्यन्ति बालाः ।**
**यत्कर्मिणो न प्रवेदयन्ति रागा-**
**त्तेनातुराः क्षीणलोकाश्च्यवन्ते ॥ ९ ॥**

कर्मिणामकृतार्थता

२८. किं च अविद्यायां बहुधा बहुप्रकारं वर्तमानाः, वयमेव कृतार्थाः कृतप्रयोजनाः[7]– इति एवम् अभिमन्यन्ति[8] अभिमानं

---

1. गुरूपदेशं विनैव, कर्मज्ञानेनैवेत्यर्थः ॥

2. वस्तुतस्तु 'अविद्यायामन्तरे वर्तमानाः'–इति निन्दा, वक्ष्यमाणविद्याप्ररोचनार्था । उत्तरमन्त्रे 'वयं कृतार्थाः' इत्येतदप्येवमेव व्याख्येयम् ॥

3. यद्यपि स्वर्गलोके नानर्थैर्हन्यन्ते, तथापि तु पुनः संसारं प्राप्ता हन्यन्त एवेत्यभिप्रायः ॥

4. भृशं हन्यमानाः आभीक्ष्ण्येन पीड्यमाना इति व्याख्यानव्याख्येयभावं द्योतयितुं भृशमित्युभयपदयोर्मध्ये निवेशितम् ॥

5. सम्यग्दर्शनविरहितत्वात् । विपरीतज्ञानपरवशीकृतत्वाच्चेति द्रष्टव्यम् ।

6. तद्वत् परियन्ति । पतन्ति च नानादुःखयोनिष्विति शेषः । कर्मफलमेव नित्यमिति मन्यमानाः स्वयं मूढाः परानपि व्यामोहयन्तीति, य एवं बुध्यन्ते ये च बोधयन्ति ते सर्वे जात्यन्धा इवानर्थं गच्छन्तीत्यनुकम्पनीया इत्यभिप्रायः ॥

7. यद्यपि स्वर्गादिरूपं प्रयोजनं कृतमेव, तथापि न तत्पारमार्थिकं प्रयोजनम्, अनात्यन्तिकत्वात् । अतोऽकृतार्थत्वमेव वस्तुतस्तेषामिति भावः ॥

8. 'अभिमन्यन्ते' इत्यधिकं वा ॥

कुर्वन्ति बाला अज्ञानिनः । यत् यस्मात् एवं कर्मिणः न प्रवेदयन्ति तत्त्वं न जानन्ति रागात् कर्मफलरागाभिभवनिमित्तम्[1], तेन कारणेन आतुराः दुःखार्ताः सन्तः क्षीणलोकाः क्षीणकर्मफलाः स्वर्गलोकात् च्यवन्ते ॥ ९ ॥

इष्टापूर्तं मन्यमाना
नान्यच्छ्रेयो वेदयन्ते प्रमूढाः ।
नाकस्य पृष्ठे ते सुकृतेऽनुभूत्वा
इमं लोकं हीनतरं वा विशन्ति ॥१०॥

पुण्यफलभोगेन न कृत्स्नकर्मक्षयः—

१०. इष्टापूर्तम् । इष्टं यागादि श्रौतं कर्म, पूर्तं वापीकूपतटाकादि स्मार्तम् । मन्यमाना एतदेव अतिशयेन पुरुषार्थसाधनं वरिष्ठं प्रधानम् इति चिन्तयन्तः, अन्यत् आत्मज्ञानाख्यं श्रेयःसाधनं न वेदयन्ते न जानन्ति[2] प्रमूढाः पुत्रपशुबन्ध्वादिषु[3] प्रमत्ततया[4] मूढाः । ते च नाकस्य स्वर्गस्य पृष्ठे उपरिस्थाने सुकृते भोगायतने[5] अनुभूत्वा[6] अनुभूय कर्मफलं पुनः इमं

1. रागाभिभूतचित्तत्वकारणात् ॥

2. तास्त तत् प्रतिभातीत्यर्थः ॥

3. 'बान्धवादिषु' इति वा ॥ 'बन्ध्वादिषु' इत्यपि क्वचित् ॥

4. प्रकर्षेण मूढाः प्रमूढाः । पुत्रादिष्वभिष्वङ्ग एव तत्र प्रमादकारणम्, प्रमाद एव च मौढ्यस्य प्रकर्ष इति भावः ॥

5. सुकृतं पुण्येनोत्पादितं भोगस्थानं नाक इत्यर्थः ॥

6. 'सुकृतेन भूत्वा' इति पाठ आदृतो नारायणेन । व्याख्यातश्च पुण्येन शरीरं लब्ध्वेति । 'अनुभूत्वा' इति छान्दसं प्रयोगमुररीकृत्य अनुभूय इत्येव व्याख्यातं भाष्यकारेणेति प्रतिभाति ॥

लोकं मानुषम् अस्माद् हीनतरं वा तिर्यङ्नरकादिलक्षणम् यथाकर्मशेषं[1] विशन्ति ॥ १० ॥

## अपरविद्याविषयोपसंहारः

**तपःश्रद्धे ये ह्युपवसन्त्यरण्ये**
**शान्ता विद्वांसो भैक्ष्यचर्यां चरन्तः ।**
**सूर्यद्वारेण ते विरजाः प्रयान्ति**
**यत्रामृतः स पुरुषो ह्यव्ययात्मा ॥ ११ ॥**

**ज्ञानयुक्तकर्मिणां गतिः—**

३०. ये पुनस्तद्विपरीता[2] ज्ञानयुक्ताः वानप्रस्थाः संन्यासिनश्च[3] तपःश्रद्धे हि[4] तपः स्वाश्रमविहितं कर्म, श्रद्धा हिरण्यगर्भादिविषया विद्या[5] ते तपःश्रद्धे उपवसन्ति सेवन्ते अरण्ये[6] वर्तमानाः सन्तः । शान्ताः उपरतकरणग्रामाः[7] विद्वांसः गृहस्थाश्च ज्ञानप्रधाना[8] इत्यर्थः । भैक्ष-

1. येन कर्मणा आरब्धं नाकोपभोग्यफलं तत्क्षये, कर्मशेषवशात् मानुषं लोकं विशन्ति पुण्यमिश्रितं पापमुत्कटं चेत्, तिर्यक्स्थावरादिलोकं वा पुण्यसंपर्करहितं पापतारतम्येन । छां. ५-१०-७,८ ; गौ.ध. २-१९ ; सू.भा. ३-१-८.

2. 'तद्विपरीतज्ञानयुक्ताः' इत्यशुद्धः (वा॥) पाठः ॥

3. अरण्ये इति सामर्थ्यात् । स्मृतिविहिततुरीयाश्रमवन्तस्त्रिदण्डिन इह संन्यासिनः ॥ बृ. भा. ३-५-१, ६-२-१५.

4. हीत्यवधारणे । न तु केवलं कर्मेत्यर्थः ॥

5. श्रद्धापूर्वकं हिरण्यगर्भादिदेवतोपासना श्रद्धेत्युच्यते ॥ छां. ५-१०-२, बृ. ६-२-१५.

6. इदमेव गमकमत्र वानप्रस्थाः संन्यासिनश्चाभिप्रेता इत्यत्र । नैष्ठिकब्रह्मचारिणां तु 'अष्टाशीतिसहस्राणामृषीणामूर्ध्वरेतसाम् । उत्तरेणार्यम्णः पन्थास्तेऽमृतत्वं हि भेजिरे' इति स्मृतिप्रामाण्यादुत्तरः पन्थाः ॥ बृ. भा. ६-२-१५.

7. निवृत्तिधर्मनिष्ठा इत्यर्थः ॥

8. पञ्चाग्निविद्याद्युपासनावन्तः इत्यर्थः ॥ सू. भा. ३-१-८

चर्यां चरन्तः परिग्रहाभावात्[1] उपवसन्त्यरण्ये इति संबन्धः । सूर्यद्वारेण मूर्योपलक्षितेन[2] उत्तरायणेन पथा ते विरजाः विरजसः[3] क्षीणपुण्यपापकर्माणः सन्तः इत्यर्थः[4] । प्रयान्ति प्रकर्षेण यान्ति यत्र यस्मिन् सत्यलोकादौ[5] अमृतः स पुरुषः प्रथमजः[6] **हिरण्यगर्भः** हि अव्ययात्मा अव्ययस्वभावः यावत्संसारस्थायी[7] । एतदन्तास्तु संसारगतयोऽपरविद्यागम्याः ॥

## नायमात्यन्तिको मोक्षः —

२१. नन्वेतं मोक्षमिच्छन्ति केचित् । न । 'इहैव सर्वे प्रविलीयन्ति कामाः' (३-२-२), 'ते सर्वगं सर्वतः प्राप्य धीराः युक्तात्मानः सर्वमेवाविशन्ति' (३-२-५)- इत्यादिश्रुतिभ्यः[8] । अप्रकरणाच्च । अपरविद्याप्रकरणे हि प्रवृत्ते न ह्यकस्मात् मोक्षप्रसङ्गोऽस्ति[9] । विरजस्त्वं त्वापेक्षिकम्[10]। समस्तम् अपरविद्याकार्यं साध्यसाधनलक्षणं

1. न हि वानप्रस्थानां संन्यासिनां च परिग्रहोऽस्ति ॥

2. अयमेव देवयानार्चिरादिमार्गशब्दाभ्यां व्यपदिश्यमानो मार्गः । सू. भा. ४-३-१ आरभ्य षट्सूत्रपर्यन्तं भाष्यं द्रष्टव्यम् ॥ गी. ८-२४.

3. विरजा इति छान्दसः प्रयोग इति भावः ॥

4. सू. भा. ४-१-१३, १४.

5. यद्यपि ब्रह्मलोक एवात्र प्रकृतो हिरण्यगर्भस्थानम्, तथापि तुल्यन्यायेन सर्वे आदित्यादिलोका अपि चक्षुरादिद्वारा उत्क्रान्तानामुपासकानां प्राप्या अत्रोपलक्षिता इति भावेन 'सत्यलोकादौ' इति आदिग्रहणम् । सुषुम्नानाडीद्वारा सत्यलोकगमनम् । इतरनाडीद्वारेण त्वन्यलोकगमनमिति विशेषः ॥ सू.भा.४-४-९

6. सू. ४-४-१. 7. न त्वात्यन्तिकमव्ययत्वमत्र ॥

8. एता हि सद्योमुक्तिमत्रैव ब्रह्मप्राप्तिलक्षणां ब्रुवन्ति ॥

9. अपरविद्यां परिसमाप्य हि 'परीक्ष्य लोकान्' इत्यादिना परविद्याविषय आरब्धव्यः ॥

10. 'विरजाः प्रयान्ति' इत्युक्तं पुण्यपापविधूननमनात्यन्तिकम् । पुनरपि कर्मशेषेण संसारमण्डलप्राप्तेः श्रुतिसूत्रितत्वादिति भावः ॥

क्रियाकारकफलभेदभिन्नं[1] द्वैतम् एतावदेव यद् हिरण्यगर्भप्राप्त्यवसानम् । तथा च मनुनोक्तम् स्थावराद्यां संसारगतिमनुक्रामता[2] 'ब्रह्मा विश्वसृजो धर्मो महानव्यक्तमेव च । उत्तमां सात्त्विकीमेतां गतिमाहुर्मनीषिणः ॥"[3] (मनु. १२--५०) इति ॥ ११ ॥

## परविद्या गुरुमुखेनैवावगन्तव्या

**परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो**
**निर्वेदमायान्नास्त्यकृतः कृतेन ।**
**तद्विज्ञानार्थं स गुरुमेवाभिगच्छे-**
**त्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम् ॥१२॥**

**विरक्तस्यैव ब्रह्मान्वेषणाधिकारः--**

३२. अथेदानीम् अस्मात् साध्यसाधनरूपात्[4] सर्वस्मात्संसाराद्विरक्तस्य परस्यां विद्यायाम् अधिकारप्रदर्शनार्थम् इदमुच्यते ॥

परीक्ष्य यदेतदृग्वेदाद्यपरविद्याविषयं स्वाभाविकाविद्या[5]कामकर्म-

---

1. ब्रह्मलोकः साध्यः, विद्यासमुच्चितं कर्म साधनम् । क्रियाकारकफलवर्जितमद्वैतज्ञानमुत्तरत्र वक्ष्यत इति भावः ॥

2. कर्मफलोपन्यासार्थ एव तु द्वादशोऽध्यायोऽयम् । शरीरजैः कर्मदोषैः स्थावरत्वं वाचिकैः पक्षिमृगतां मानसैश्चान्त्यजातितां (मनु-१२-९) निगच्छति इत्युक्त्वा सात्त्विकीं गतिमुपक्रम्येदमुक्तमुत्तमगत्यभिधानार्थम् । तथा चापरविद्यान्तर्गतमेवैतदिति भावः ॥

3. ब्रह्मा हिरण्यगर्भः, विश्वसृजः प्रजापतयः, धर्मो यमः, महान् महत्तत्त्वाभिमानिनी देवता सूत्रात्मा वा, अव्यक्तम् अव्याकृतात्मा ॥

4. १-२-११, भा. भा. ३१ ; का. भा. १-३-२०. साधनफलात्मकसंसारपरीक्षणमेतदुक्तं ततो व्युत्थानार्थम् ॥ बृ. भा. ३-५-१.

5. अविद्या हि स्वाभाविकी, न त्वागन्तुकी । नैसर्गिकोऽयं व्यवहार इत्युक्तत्वात् ॥ सू. भा. अव.

दोषवत्पुरुषानुष्ठेयम्, अविद्यादिदोषवन्तमेव पुरुषं प्रति विहितत्वात्[1]। तदनुष्ठानकार्यभूताश्च लोका ये दक्षिणोत्तरमार्गलक्षणाः[2] फलभूताः, ये च विहिताकरणप्रतिषेधातिक्रमदोषसाध्याः[3] नरकतिर्यक्प्रेतलक्षणाः, तानेतान् परीक्ष्य प्रत्यक्षानुमानोपमानागमैः[4] सर्वतो[5] याथात्म्येनावधार्य लोकान् संसारगतिभूतान्, अव्यक्तादिस्थावरान्तान् व्याकृताव्याकृतलक्षणान्[6] बीजाङ्कुरवदितरेतरोत्पत्तिनिमित्तान्[7] अनेकानर्थशतसहस्रसङ्कुलान् कदलीगर्भवदसारान् मायामरीच्युदकगन्धर्वनगराकारस्वप्नजलबुद्बुदफेनसमान्[8] प्रतिक्षणप्रध्वंसान्[9] पृष्ठतः कृत्वा अविद्याकामदोषप्रवर्तितकर्मचितान्।

1. यथा विशेषकामदोषवतः काम्यानि कर्माणि, एवं सामान्यतो इष्टानिष्टप्राप्तिपरिहारेच्छोर्स्याविद्यादिदोषवतो नित्यान्यपि विहितानि॥ बृ.भा.१-३-१

2. मार्गद्वयेन लक्ष्यन्ते ज्ञाप्यन्ते प्राप्यन्ते चेति तल्लक्षणाः॥

3. शास्त्रीयकर्माण्यप्यविद्यादिदोषवत्पुरुषकृतिसाध्यानि किमु वक्तव्यं लौकिकदोषप्रयुक्तज्ञानकर्माणि कृतिसाध्यानीति। कर्मफलभूतेषु लोकेषु तु सुखदुःखतारतम्यं साधनभूतधर्माधर्मतारतम्यनिमित्तम्, सू. भा. १-१-४, बृ. भा. अव.॥

4. कर्मचितो लोकोऽत्र यथा प्रत्यक्षेण एवं पुण्यचितोऽपीति प्रत्यक्षानुमानोपमानैर्युक्त्युपबृंहितश्रुत्या चेत्यर्थः। अर्थापत्त्यनुपलब्ध्योरन्यत्रैवान्तर्भावो वेदितव्यः। प्रमाणसंख्यायां हि भाष्यकारस्य न निर्भरः॥

5. परीत्युपसर्गस्यायमर्थः। सर्वतः स्वरूपस्वभावादिनिर्धारणमेवात्र परीक्षणमिति भावः॥

6. अव्याकृतमव्यक्तम्, महादिस्थावरान्तं व्याकृतं व्यक्तम्॥

7. बीजमव्यक्तम्, अङ्कुरं व्यक्तम् इति कार्यकारणभावो यद्यपि तथापि बीजादङ्कुरोऽङ्कुराद्बीजमिति (बृ. भा. १-४-७) बीजाङ्कुरसन्ततिरविच्छिन्नैव यावदविद्यानाशमिति भावः॥

8. गौ. का. भा. २-३१, बृ. भा. १-५-२. अनित्यत्वासारत्वासत्यत्वस्फोरणार्थं स्थावरान्तत्ववचनं कदलीगर्भमायाद्युपमानोपादानं च॥

9. मायादिवदसत्त्वं प्रतिक्षणप्रध्वंसित्वं च यथाप्रतीतरूपेण, स्वात्मभूताक्षररूपेण तु परमार्थसत्यत्वं कालातीतत्वं च॥

धर्माधर्मनिवर्तितान् इत्येतत् । ब्राह्मणः । ब्राह्मणस्यैव विशेषतोऽधिकारः[1] सर्वत्यागेन ब्रह्मविद्यायाम् इति ब्राह्मणग्रहणम् । परीक्ष्य लोकान् किं कुर्यादिति ? उच्यते । निर्वेदम् । निष्पूर्वो विदिरत्र वैराग्यार्थे[2] । वैराग्यम् आयात् । कुर्यादित्येतत् । स वैराग्यप्रकारः प्रदर्श्यते । इह संसारे नास्ति कश्चिदपि अकृतः पदार्थः । सर्वे एव हि लोकाः कर्मचिताः । कर्मकृतत्वाच्चानित्याः[3] । न नित्यं किंचिदस्तीत्यभिप्रायः । सर्वं तु कर्म अनित्यस्यैव साधनम् । यस्मात् चतुर्विधमेव हि सर्वं कर्म कार्यम् उत्पाद्यम् आप्यम् संस्कार्यं विकार्यं वा[4] । नातःपरं कर्मणां विषयोऽस्ति[5] । अहं च नित्येन, अमृतेन, अभयेन, कूटस्थेन, अचलेन, ध्रुवेणार्थेन[6] अर्थी न तद्विपरीतेन । अतः किं कृतेन कर्मणा आयासबहुलेन अनर्थसाधनेन ? इति[7] ॥

1. ब्राह्मणस्यैवाधिकार इति केचित् । 'विशेषतः' इति विशेषणादानात्तु संन्यासमात्रे क्षत्रियवैश्ययोरप्यस्त्यधिकार इति सूच्यते तयोरपि वार्धके राजानुमतयोः संन्यासोऽनुज्ञातो दृश्यते राजधर्मे (रा. ध. ६४-१४,१५) ॥

2. लोकेष्वनादर एव हि परीक्षणफलम् ॥

3. अनित्यत्वद्योतनाय हि कर्मचितत्वविशेषणमित्यभिप्रायः ॥

4. कर्मफलस्य उत्पाद्यत्वादिचातुर्विध्यं प्रस्थानत्रयभाष्ये तत्र तत्रोपवर्णितं दृश्यते । ई. भा. अव.; तै. भा. शिक्षावल्ल्युपसंहारे ; सू.भा. १-१-४, बृ.भा. ३-३-१.

5. 'विशेषोऽस्ति' इति पाठान्तरापेक्षया अयं ( वा ॥ ) ज्यायान ॥

6. न त्वनित्येन कर्मफलेन दृष्टेनादृष्टेन वेत्यभिप्रायः । ई. भा. अव. । नित्येन ध्रुवेणेति विशेषणद्वयोपादानं पृथिव्यादिवदापेक्षिकनित्यत्ववारणाय । का.भा. १-२-१५.

7. अनर्थसाधनेन, परमपुरुषार्थासाधकेन, संसारप्रापकतयाऽनर्थावकाशकरेण च ॥

सद्गुरुलक्षणम्

३३. एवं निर्विण्णः अभयं, शिवम्, अकृतं, नित्यं, पदं यत् तद्विज्ञानार्थं विशेषेणाधिगमार्थं[1] स निर्विण्णो ब्राह्मणः गुरुमेव आचार्यं शमदमदयादिसंपन्नम्[2] अभिगच्छेत्। **शास्त्रज्ञोऽपि स्वातन्त्र्येण ब्रह्मज्ञानान्वेषणं न कुर्यात्** इत्येतत् 'गुरुमेव' इत्यवधारणफलम्[3]। समित्पाणिः समिद्भारगृहीतहस्तः[4] श्रोत्रियं अध्ययनश्रुतार्थसंपन्नं ब्रह्मनिष्ठं[5] हित्वा सर्वकर्माणि केवलेऽद्वये ब्रह्मणि निष्ठा यस्य सोऽयं ब्रह्मनिष्ठः। 'जपनिष्ठः', 'तपोनिष्ठः' इति यद्वत्[6]। न हि कर्मिणो ब्रह्मनिष्ठता संभवति[7]। कर्मात्मज्ञानयोर्विरोधात्। स तं गुरुं विधिवदुपसन्नः प्रसाद्य पृच्छेत्[8] अक्षरं पुरुषं सत्यम् ॥ १२ ॥

**तस्मै स विद्वानुपसन्नाय सम्य-**
**क्प्रशान्तचित्ताय शमान्विताय।**
**येनाक्षरं पुरुषं वेद सत्यं**
**प्रोवाच तां तत्त्वतो ब्रह्मविद्याम् ॥ १३ ॥**

1. न केवलं सामान्यतो ज्ञानार्थं किं त्वनुभवपर्यन्तज्ञानार्थम् ॥ गी. भा. ७-२, ९-१.
2. 'शमदमादि' वा ॥
3. शास्त्रज्ञस्य स्वयमन्वेषणे न तत्त्वाधिगमः स्यात्, स्वभावतो बहिर्मुखत्वान्मनसामिति भावः ॥
4. श्रद्धाविनयादिशिष्यगुणोपलक्षणार्थमिदम् ॥
5. शास्त्रार्थतत्त्वोपदेशसामर्थ्यार्थं श्रोत्रियत्वविशेषणम्, स्वयमतत्त्वदर्शिन उपदेशसामर्थ्यं न स्यादिति सूचनार्थं ब्रह्मनिष्ठत्वविशेषणम् । गी. ४-३४.
6. ये जपन्ति वा तात्पर्येण परितिष्ठन्ति, तदेवानुतिष्ठन्ति स एव हि जपनिष्ठः, तपोनिष्ठः इति कथ्यते ।
7. न हि ब्रह्मैवेदं सर्वम् इति प्रत्ययः क्रियाकारकफलभेदप्रत्ययमनुपमृद्य जायते । द्रष्टव्यं ब्रह्मसंस्थवाक्यभाष्यं छां २-२३-१. ॥
8. 'गुरुमेवाभिगच्छेत्' इत्यवधारणफलं पृच्छेदिति ॥ गी. भा. ४-३४.

## अधिकारिलक्षणम्

३४. तस्मै स विद्वान् गुरुर्ब्रह्मवित्, उपसन्नाय उपगताय[1] सम्यक् यथाशास्त्रम्[2] इत्येतत् । प्रशान्तचित्ताय उपरतदर्पादिदोषाय[3] शमान्विताय बाह्येन्द्रियोपरमेण[4] च युक्ताय । सर्वतो विरक्ताय इत्येतत्[5] । येन विज्ञानेन यया विद्यया[6] परया अक्षरम् अद्रेश्यत्वादिविशेषणं तदेवाक्षरं पुरुषशब्दवाच्यं पूर्णत्वात्[7], पुरि शयनाच्च[8] सत्यं तदेव परमार्थस्वाभाव्यात्[9] अक्षरं च अक्षरणात्[10] अक्षतत्वात्[11] अक्षयत्वात्[12] वेद विजानाति तां ब्रह्मविद्यां तत्त्वतः यथावत् प्रोवाच प्रब्रूयात् इत्यर्थः[13] ।

1. उपसदनम्, उपगमनम्, उपसरणम्, अभिगमनम्, उपसर्पणम्–इति पर्यायशब्दाः ॥

2. शास्त्रोक्तमेव परमार्थतत्त्वम् । तत्प्रवचनमेव च सम्यक्प्रवचनम् । एतन्निर्वाहार्थमेव श्रोत्रियत्वविशेषणमुपात्तमित्युक्तम् ॥

3. अमानित्वादिसमन्विताय । अदुष्टं सुसंस्कृतं च मनो ज्ञानकरणम् ॥ गी. भा. १३–७, प्रभृत्येकादशश्लोकं यावदुक्तम् अमानित्वादि ॥

4. प्रशान्तचित्तायेति शमः प्रागुक्तः । अत्र तु शमान्वितायेति दम उच्यते इत्यपुनरुक्ततायै व्याख्येयम् । दमेऽप्यन्तःकरणनिग्रहोऽपेक्ष्यत इति कृत्वा 'प्र' इत्युपसर्गग्रहणमिति ज्ञेयम् ॥

5. सर्वतो विरक्तस्यैव हि शमदमादयः कार्त्स्न्येन सिद्ध्यन्ति ॥

6. अत्र 'विद्यया च' इति वा ॥ पाठे चोऽधिकः नापेक्षितश्च ॥

7. स्वेन रूपेण पूर्णम्, व्यापि । कर्तरि निष्ठा । बृ. भा. ५–१–१.

8. सर्वासु पूर्षु जीवेनात्मना प्रविष्ट इत्यर्थः ॥ बृ. भा.२–५–१८.

9. एतदनन्तरम् 'अव्ययम्' इत्यधिकं वा ॥ न तु कर्मफलादिवद्व्यावहारिकं सत्यम् इत्यर्थः ॥

10. क्षर संचलने इति धातोः ॥ 11. क्षि हिंसायाम् इत्यस्माद्धातोः ॥

12. क्षि क्षये इत्यस्माद्धातोः ॥ एवं चाक्षरणादित्यनेनावयवान्यथापत्तिरूपपरिणामाभावः, अक्षयादित्यपक्षयाभावः, अक्षतत्वादिति विनाशाभावश्च विवक्षितव्यः ।

13. छान्दसो लिट्प्रयोगो विध्यर्थे इति भावः ॥

आचार्यस्यापि अयं[1] नियमो[2] यन्न्यायप्राप्तसच्छिष्यनिस्तारणम् अविद्या-महोदधेः ॥ १३ ॥

इत्याथर्वणमुण्डकोपनिषद्भाष्ये प्रथममुण्डके द्वितीयः खण्डः
समाप्तं प्रथममुण्डकम्

1. अयमेव क ॥

2. इदं च व्यावहारिकदृष्ट्या । आचार्यो हि नाम कृतकृत्य इति न विस्मर्तव्यः । स्वयमेव तु महाकरुणाप्रेरितो निस्तारयति सच्छिष्यानिति । द्रष्टव्यम् – ऐ. भा. १-३-४ (परमकारुणिकेनाचार्येण....वेदान्तमहाभेर्यां ताड्यमानायाम् ।) छां. भा. ६-१४-२ (परमकारुणिकं कञ्चिद्ब्रह्मात्मविदं विमुक्तबन्धनं ब्रह्मिष्ठं यदा आसादयति ) मां. का. भा. १-१६ (यदा वेदान्तार्थतत्त्वाभिज्ञेन परमकारुणिकेन गुरुणा ...प्रतिबोध्यमानः ) ॥

# द्वितीयमुण्डके प्रथमः खण्डः

उत्तरग्रन्थसंबन्धः—

३५. अपरविद्यायाः सर्वं कार्यमुक्तम् । स च संसारो यत्सारः[1] यस्मान्मूलादक्षरात् संभवति,[2] यस्मिंश्च प्रलीयते तदक्षरं पुरुषाख्यं सत्यम् । यस्मिन्[3] विज्ञाते सर्वमिदम् विज्ञातं भवति तत् परस्या ब्रह्मविद्याया विषयः । स वक्तव्यः इति उत्तरो ग्रन्थ आरभ्यते ॥

अक्षरं सर्वजगदुत्पत्तिप्रलयकारणम्

**तदेतत्सत्यं यथा सुदीप्तात्पावकाद्विस्फुलिङ्गाः**
**सहस्रशः प्रभवन्ते सरूपाः ।**
**तथाक्षराद्विविधाः सोम्य भावाः**
**प्रजायन्ते तत्र चैवापि यन्ति ॥ १ ॥**

अक्षरस्य जीवोत्पत्तिप्रलयनिमित्तत्वम्—

३६. यदपरविद्याविषयं कर्मफललक्षणं सत्यम्, तदापेक्षिकम्[4] । इदं तु परविद्याविषयं परमार्थसल्लक्षणत्वात् तदेतत् सत्यम्, यथाभूतं विद्या-

---

1. प्रतीतरूपेण तु कदलीगर्भवदसारः संसार इत्युक्तं प्राक् । परमार्थदृष्ट्या तु अक्षरसारोऽयमिति भावः । एतेन शून्यवादाद्वैलक्षण्यं वेदान्तदर्शनस्य दर्शितम् ॥

2. गी. १५-१.

3. 'अत एव' इति द्रष्टव्यम् यस्मिन्निश्चयतः प्राक् ॥

4. स्वर्गरूपफलमापेक्षिकं सत्यम् । मनुष्यलोकसुखवद् दुःखमिश्रितत्वात्, कर्मानुष्ठानेनावश्यं प्राप्यत्वाच्च । एवं ज्ञानसमुच्चितकर्मफलमपि ब्रह्मलोकप्राप्ति-रूपमापेक्षिकसत्यमेव ; कल्पान्तं स्थायित्वात् । 'आभूतसंप्लवं स्थानममृतत्वं हि भाष्यते' (वि. पु. २-८-९७) इति स्मृतेः ॥

विषयम्[1] । अविद्याविषयत्वाच्च अनृतमितरत्[2] । अत्यन्तपरोक्षत्वात्[3] कथं नाम प्रत्यक्षवत्[4] सत्यमक्षरं प्रतिपद्येरन् इति दृष्टान्तमाह । यथा सुदीप्तात् सुष्ठु दीप्तात् इद्धात् पावकात् अग्नेः, विस्फुलिङ्गाः अग्न्यवयवाः सहस्रशः अनेकशः प्रभवन्ते निर्गच्छन्ति सरूपाः अग्निसलक्षणा एव,[5] तथा उक्तलक्षणादक्षरात् विविधाः नानादेहोपाधिभेदम् अनुविधीयमानत्वात् विविधाः हे सोम्य, भावाः जीवाः[6] आकाशादिवत्[7] घटादि परिच्छिन्नाः सुषिरभेदाः[8] । घटाद्युपाधिप्रभेदमनु भवन्ति । एवं नानानामरूपकृतदेहोपाधिप्रभवमनु प्रजायन्ते । तत्र चैव तस्मिन्नेव अक्षरे अपियन्ति देहोपाधिविलयमनु विलीयन्ते घटादिविलयमन्विव सुषिरभेदाः । यथा आकाशस्य सुषिरभेदोत्पत्तिप्रलयनिमित्तत्वं घटाद्युपाधिकृतमेव[9], तद्वत् अक्षरस्यापि नामरूपकृतदेहोपाधिनिमित्तमेव जीवोत्पत्तिप्रलयनिमित्तत्वम्[10] ॥ १ ॥

1. यथाभूतार्थबोधिनी हि विद्या नाम ॥

2. अविद्याकल्पितनामरूपलक्षणत्वात् इतरत् कर्मफलं ज्ञानसमुच्चितकर्मफलं च अनृतम्, मृगतृष्णिकोदकादिवत् ॥

3. यद्यपि ब्रह्म नित्यापरोक्षं शास्त्रदृष्ट्या (बृ. ३-५-१) तथाप्यज्ञदृष्ट्या अत्यन्तपरोक्षमिति भावः ॥ ई. भा. ५.

4. सोऽहमित्यापरोक्ष्येणेत्यर्थः । न पुनरिन्द्रियगोचरत्वेन । प्रत्यक्षादिप्रमाणस्याविषयत्वात् ॥ का. भा. २-१-१४.

5. सालक्षण्यप्रदर्शनार्थमेव विस्फुलिङ्गनिदर्शनमिति भावः ॥ बृ. भा. २-१-२०.

6. यद्यपि जीवा नोत्पद्यन्त एव परमार्थतः, अजत्वादिश्रुतिभ्यः, ब्रह्मानन्यत्वादिश्रुतिभ्यश्च, तथापि सालक्षण्यद्योतनार्थमुपाधिप्रयुक्तमिदं जन्म श्राव्यते । तथा च निर्णेष्यतीव सूत्रकारोऽत्र द्रष्टव्यः ॥ सू. भा. २-३-१७.

7. 'आकाशादिव' इति पाठो यद्यस्ति स एव ग्राह्यः ॥

8. न ह्याकाशस्योत्पत्तिरेव मुख्यवृत्त्या । घटाद्युपाधीनामप्याकाशादेवोत्पत्तिरित्यपि द्रष्टव्यम् ॥ गौ. का. भा. ३-३.

9. स्वतो जीवस्य जन्माद्यसंभवात् । उपपादितं चैतत् गौडपादीयाद्वैतप्रकरणे ॥

दिव्यो ह्यमूर्तः पुरुषः
सबाह्याभ्यन्तरो ह्यजः ।
अप्राणो ह्यमनाः शुभ्रो
ह्यक्षरात्परतः परः ॥ २ ॥

सर्वविकाररहितमक्षरम्–

३७. नामरूपबीजभूतात्[1], अव्याकृताख्यात् स्वविकारापेक्षया परात् अक्षरात्[2] परं यत्सर्वोपाधिभेदवर्जितं[3] अक्षरस्यैव स्वरूपम् आकाशस्येव सर्वमूर्तिवर्जितम् नेति नेति (बृ. २-३-६) इत्यादि[4] विशेषणं विवक्षन्नाह –

दिव्यः द्योतनवान्। स्वयंज्योतिष्ट्वात्[5]। दिवि वा स्वात्मनि भवः[6]। अलौकिको वा[7]। हि यस्मात् अमूर्तः सर्वमूर्तिवर्जितः[8]।

---

1. 'अविद्याकल्पितात्' इति नामरूपबीजविशेषणं देयम् । आत्मनोऽद्वैतात्वसिद्ध्यर्थम् ॥ सू. भा. २-१-१४.

2. विद्यया बाधो यावत्तावदव्याकृतं न विनश्यतीति तद्ध्यक्षरमित्युच्यते । गी. भा. १५-१६. तच्च स्वविकारापेक्षया परं त्रिकालातीतत्वादिति परमिति विशेषणम् ॥ सू. भा. १-२-२२.

3. व्याकृताव्याकृतोपाधिमत्त्वेनैव ह्यक्षरं जगत्कारणमिति कार्यमिति च व्यपदिश्यते । स्वतस्तु तदुभयविलक्षणमेव ॥ के. भा. १-४. सू. भा. २-१-२७

4. निरुपाधिकेन स्वेन रूपेण सर्वथा निर्धर्मकमिति 'नेति नेति', 'अस्थूलमनणु'– इत्यादिना अतद्धर्मप्रतिषेधेनैव प्रतिपादयति शास्त्रम् ॥

5. अपरप्रकाश्यनित्यप्रकाशरूपत्वात् दिव्यम् । दिवु कान्तौ इति धात्वर्थानुगमात् ॥

6. स्वमहिमप्रतिष्ठं हि तदक्षरम् । अप्रकाशरूपस्यानात्मनः सर्वस्याप्याधारभूतं स्वयं नित्यप्रकाशरूपत्वादितराधारानपेक्षम् इति भावः ॥ छां. ७-२४-१.

7. अप्राकृतं हि दिव्यमित्युच्यते । प्राकृतलौकिकवस्तुविलक्षणत्वाद्धि अक्षरं दिव्यमिति भावः ॥

8. आकाशादपि सूक्ष्मतरत्वात्सर्वमूर्तिवर्जित इत्युच्यते ॥ बृ. २-३-३.

पुरुषः पूर्णः पुरिशयो वा[1] । दिव्यो ह्यमूर्तः पुरुषः[2] । सबाह्याभ्यन्तरः सह बाह्याभ्यन्तरेण वर्तत इति[3] । अजः न जायते कुतश्चित् स्वतः । अन्यस्य जन्मनिमित्तस्य चाभावात्[4] । यथा जलबुद्बुदादेर्वाय्वादि । यथा (वा) नभःसुषिरभेदानां घटादि[5] । सर्वभावविकाराणां जनिमूलत्वात् तत्प्रतिषेधेन सर्वे प्रतिषिद्धा भवन्ति[6] । सबाह्याभ्यन्तरो ह्यजः, अतः[7] अजरोऽमृतोऽक्षरो ध्रुवोऽभय इत्यर्थः[8] ॥

## सर्वजीवधर्मविवर्जितमक्षरम्

३८. यद्यपि देहाद्युपाधिभेददृष्टीनाम् अविद्यावशात्[9] देहभेदेषु[10] सप्राणः समनाः सेन्द्रियः सविषय इव प्रत्यवभासते तलमलादि-

1. द्रष्टव्यं १-२-११ पुरुषशब्दभाष्यं (भा. भा. ३४) तट्टिप्पणं च ॥

2. पुरुषवाक्यं नास्ति क्वा ॥

3. बाह्याभ्यन्तरव्यापक इत्यर्थः ॥

4. 'स्वतोऽजन्य' इति (क्वा ॥) पाठो न समीचीनः । स्वतो न जायते । निरवयवत्वात्, निरवयवस्यारम्भकाभावात् । नापि परतः कुतश्चित् । अद्वितीयत्वात् इत्यर्थः । तस्मादस्य परतः उत्पत्त्यसंभवाच्च ॥ सू. भा. २-३-९.

5. 'वाय्वादिः', 'घटादिः' इति च क्वा ॥ यथा वाय्वादिनिमित्तान्तरं विद्यते जलबुद्बुदादिजन्मनि, यथा वा घटादि नभःसुषिरभेदजन्मनि, न तथेह – इति व्यतिरेकदृष्टान्तोदानम् । नभःसुषिरभेदवदौपाधिकमपि जन्म नास्तीति भावः । उपाधीनामविद्याकल्पितत्वात् । मायिकं तु जन्म जीवात्मनो स्वीकृतं प्रागिति भावः । सू. भा. ३-२-११.

6. आविर्भावविकारप्रतिषेधादेव अस्ति, वर्धते, विपरिणमतेऽपक्षीयते, विनश्यतीत्येवमादयोऽपि प्रतिषिद्धा भवन्तीत्यर्थः ॥ गी. भा. २-२०.

7. यस्मात्सर्वव्यापकत्वात्स्वभावतः परतश्चाजः, तस्मादित्यर्थः ॥

8. बृ. ४-४-२५. अत्रामृतशब्देनैवामरत्वमपि संगृहीतं द्रष्टव्यम् । लेखकप्रमादात्त्रुटितं वा । ध्रुव इति कूटस्थनित्य इत्यर्थः ॥

9. देहेन्द्रियमनःसंयुक्तोऽहमितीयमविद्यादृष्टिः ॥

10. सुरनरतिर्यगादिदेहविशेषेषु ॥

मदिव आकाशम्, तथापि तु स्वतः परमार्थदृष्टीनाम्[1] अप्राणः । अविद्यमानः क्रियाशक्तिभेदवान् (प्राणः) चलनात्मको वायुः[2] यस्मिन् असौ अप्राणः[3] । तथा अमनाः । अनेकज्ञानशक्तिभेदवत् सङ्कल्पाद्यात्मकं मनोऽपि अविद्यमानं यस्मिन् सोऽयम् अमनाः । अप्राणो ह्यमनाश्च इति प्राणादिवायुभेदाः, कर्मेन्द्रियाणि तद्विषयाश्च तथा च बुद्धिमनसी, बुद्धीन्द्रियाणि तद्विषयाश्च प्रतिषिद्धा वेदितव्याः[4] । तथा[5] श्रुत्यन्तरे 'ध्यायतीव लेलायतीव' (बृ. ४-३-७) इति[6] । यस्माच्च एवं प्रतिषिद्धोपाधिद्वयः, तस्मात् शुभ्रः शुद्धः[7] ॥

## अव्याकृतादपि परमक्षरम्—

३९. अतः अक्षरात् नामरूपबीजोपाधिलक्षितस्वरूपात्[8] । सर्वकार्यकारणबीजत्वेन[9] उपलक्ष्यमाणत्वात् परं[10] तदुपाधिलक्षणम्

1. 'परमार्थस्वरूपदृष्टीनाम्' इति वा ॥ यथावस्थितात्मदृष्टिः परमार्थदृष्टिः ॥ 2. आध्यात्मिको वायुः ॥

3. परमार्थदृष्ट्या शरीरं वा तद्गतक्रियाविशेषो वा क्वचिदपि नास्तीत्यर्थः । एवं ज्ञानशक्तिभेदविषयेऽपि द्रष्टव्यम् ॥

4. सर्वबाह्याध्यात्मिकभावसंसर्गप्रतिषेधोपलक्षणार्थः प्राणमनःप्रतिषेध इत्यर्थः ॥ 5. 'यथा' इति पाठान्तरम् ॥

6. तत्रापि ज्ञानक्रियाशक्त्युपलक्षितसर्वप्रतिषेध एव विवक्षित इति भावः।

7. सर्वानात्मसंसर्गरहितः । ई· ८ । एतेन जीवत्वं सर्वथापि व्योम्नीव तलमलादिकं कल्पितमित्युक्तं भवति ॥ सू· भा. १-३-२०.

8. नामरूपबीजमव्याकृतभूतसूक्ष्मम् । बीजरूपोपाधिलक्षितस्वरूपमक्षरशब्दवाच्यम् । अविद्याकल्पितनामरूपलक्षणेन हि रूपभेदेन व्याकृताव्याकृतत्वमक्षराख्यस्य ब्रह्मणोऽपि (सू· भा· २-१-२७ : बृ. भा· १-४-७ अव्याकृतशब्दविवरणं द्रष्टव्यम्)। कारणत्वेनोपलक्ष्यमाणं ब्रह्म परं सर्वविकारापेक्षया । तस्मादपि परात्परमव्याकृतोपाधेरप्यविद्याकल्पितत्वात् निरुपाधिकमक्षरम् इत्यर्थः ॥

9. 'कार्यकरण' इत्यसाधुः पाठः । यद्यप्याकाशवाय्वादीनां कार्यकारणभावः प्रतीयते तथापि अव्याकृतोपाधिकं ब्रह्मैव मूलकारणम् । सू. भा. २-३-१३, छां· भा· ६-२-३ तत्तेज ऐक्षत इत्यस्य भाष्यं द्रष्टव्यम् ॥

10. अतः परं 'तत्त्वम्' इत्यधिकं वा ॥ अनपेक्षितं तु ॥

अव्याकृताख्यम् अक्षरं सर्वविकारेभ्यः । तस्मात् परतः अक्षरात् । परः निरुपाधिकः पुरुषः इत्यर्थः[1] । यस्मिन् तदाकाशाख्यमक्षरं संव्यवहारविषयम्[2] ओतं च प्रोतं च[3] ॥ २ ॥

४०. कथं पुनरप्राणादिमत्त्वं तस्येति ? उच्यते । यदि हि प्राणादयः प्रागुत्पत्तेः पुरुष इव स्वेन आत्मना सन्ति,[4] तदा पुरुषस्य प्राणादिना विद्यमानेन[5] प्राणादिमत्त्वं भवेत् । न तु ते प्राणादयः प्रागुत्पत्तेः पुरुष इव स्वेनात्मना सन्ति[6] । अतोऽप्राणादिमान् परः पुरुषः । यथा अनुत्पन्ने पुत्रे अपुत्रो देवदत्तः[7] । कथं ते न सन्ति प्राणादय इति ? उच्यते

**एतस्माज्जायते प्राणो**
**मनः सर्वेन्द्रियाणि च ।**
**खं वायुर्ज्योतिरापः**
**पृथिवी विश्वस्य धारिणी ॥ ३ ॥**

1. इत्थं च कारणमप्यौपाधिकं न वास्तवमक्षरे इत्युक्तं भवति ॥

2. 'संव्यवहारविषयं' इति पाठोऽयं साधीयान् । अव्याकृतरूपमपि संव्यवहारविषयमेव । कार्यभूतविभागव्यवहारादनुमेयत्वात् कारणस्य । कार्यत्वस्येव कारणत्वस्यापि मिथ्याज्ञानप्रतिबद्धत्वादिति भावः ॥ सू. भा. २-१-९.

3. बृ. भा. ३-८-७, ८. तदाश्रयम्, तस्मिन्नेवाध्यस्तमित्यर्थः ॥

4. यथा पुरुषः पुरुषात्मना अस्त्येव प्राक्सृष्टेः, एवं प्राणादयो यदि प्राणाद्यात्मना सन्ति इत्यर्थः ॥

5. 'स्वात्म' इति क्व ॥ पाठः । परमार्थतोऽपि सत्ता, न तु प्रतीतिमात्रशरीरेणेति भावः ॥

6. 'पुरुष इव स्वेनात्मना' इति नास्ति क्व ॥ पाठे । सन्ति 'तदा' इति क्व ॥ पाठे [illegible] । प्रागुत्पत्तेः प्राणादयो पुरुषात्मनैव सन्ति, इदानीमपि तदात्मना न अन्यत्रेति भावः ॥

7. पितुः पुत्रो जायत इति व्यावहारिकं प्रत्ययं सिद्धवत्कृत्य अयं दृष्टान्तः । परमार्थजनिस्तु तत्रापि निषिध्यते । द्रष्टव्यम् गौ. का. भा. ४-२२.

प्राणादीनामुत्पत्तिः अक्षरादेव–

४१. यस्मात् एतस्मादेव पुरुषात् नामरूपबीजोपाधिलक्षितात्[1] जायते उत्पद्यते अविद्याविषयो[2] विकारभूतः नामधेयोऽनृतात्मकः प्राणः। 'वाचारम्भणं विकारो नामधेयम्' (छां ६-१-४) अनृतं[3] इति श्रुत्यन्तरात्। न हि तेन अविद्याविषयेण अनृतेन प्राणेन सप्राणत्वं परस्य[4] स्यात्। अपुत्रस्य[5] स्वप्नदृष्टेनेव पुत्रेण सपुत्रत्वम्। एवं मनः सर्वाणि च इन्द्रियाणि विषयाश्च एतस्मादेव जायन्ते। तस्मात् सिद्धम् अस्य पुरुषस्य निरुपचरितम्[6] अप्राणादिमत्त्वम् इत्यर्थः। यथा च प्रागुत्पत्तेः परमार्थतोऽसन्तः, तथा प्रलीनाश्च इति द्रष्टव्याः[7] ॥

यथा करणानि मनश्च इन्द्रियाणि च[8] तथा शरीरविषयकारणानि भूतानि। खम् आकाशम्, वायुः बाह्यः[9] आवहादिभेदः[10] ज्योतिः अग्निः।

1. अविद्याकल्पितनामरूपबीजोपलक्षितात् अव्याकृतात्मनः। न तु निरुपाधिकात् शुद्धात् इत्यर्थः ॥ सू. भा. २-१-१४.

2. 'अविद्याविषयविकारभूतः' इति आ ॥ पाठतोऽयमेव वा ॥ पाठः साधीयान् ॥

3. नाममात्रत्वात् अनृतम् इति भावः ॥

4. पुरुषस्य इति शेषः ॥

5. सपुत्रस्यापि स्वप्ने सपुत्रत्वं नास्त्येव स्वप्नदृष्टपुत्रेण ; किमु वक्तव्यम् अपुत्रस्येति भावः ॥

6. मुख्यवृत्त्यैव ॥

7. खण्डादिममन्त्रोक्तरीत्या, षष्ठप्रश्नोक्तदिशाच (प्र· ६-५) सर्वमपि अक्षरपुरुष एव प्रलीयते। इत्थं च यदादौ अन्ते च नास्ति मध्ये भातमपि तदनृतमेवेति युक्तम् इति भावः ॥ गौ· का. भा· २-६.

8. चयुक्तो वा ॥ पाठ एव युक्ततरः, मूलानुसारित्वात् ॥

9. 'अन्तर्बाह्यः' इति आ ॥ पाठे 'अन्तः' इत्यधिकमनपेक्षितम् ॥

10. आवहः, प्रवहः, उद्वहः, संवहः, विवहः, परिवहः, परावहः– इति सप्तधा भिन्न इत्यर्थः ॥ मो· ध· ३२८-३६, ५२.

आपः उदकम् । पृथिवी धरित्री विश्वस्य सर्वस्य धारिणी । एतानि च शब्दस्पर्शरूपरसगन्धोत्तरोत्तरगुणानि पूर्वपूर्वगुणसहितानि[1] एतस्मादेव जायन्ते ॥

थसंबन्धः –

४२. संक्षेपतः परविद्याविषयम् अक्षरं निर्विशेषं पुरुषं सत्यं 'दिव्यो ह्यमूर्तः' (२-१-२) इत्यादिना मन्त्रेणोक्त्वा पुनस्तदेव[2] सविशेषं[3] विस्तरेण वक्तव्यम् इति प्रवर्तते । संक्षेपविस्तरोक्तो हि पदार्थः सुखाधिगम्यो भवति सूत्रभाष्योक्तिवदिति[4] ॥ ३ ॥

**मूर्धा चक्षुषी चन्द्रसूर्यौ**
**श्रोत्रे वाग्विवृताश्च वेदाः ।**
**वायुः प्राणो हृदयं विश्वमस्य**
**पद्भ्यां पृथिवी ह्येष सर्वभूतान्तरात्मा ॥ ४ ॥**

1. सूक्ष्माणि भूतानि प्रथममुत्पद्यन्ते । अनन्तरं तासां त्रिवृतं त्रिवृतमेकैकामकरोदिति पञ्चीकरणोपलक्षणार्थं त्रिवृत्करणश्रुतेः पञ्चात्मकत्वम् अवगम्यते, तत एकैकस्य पञ्चगुणत्वं कथितमन्यत्र । कथमिह पञ्चीकरणम् अनादृत्य प्रथमसर्ग एव आकाशस्यैकगुणत्वं वायोर्द्विगुणत्वं तेजसस्त्रिगुणत्वम् इत्याद्युच्यते? – इत्याक्षिप्य 'भूतसर्गे साम्यासाम्यप्रतिपादनाय प्रक्रियान्तरं न विरुध्यते' इति टीकाकारः समादधे । परं प्र. भा. ४-८, तै. भा. २-१ इत्यादिभाष्येष्वपि एषैव प्रक्रिया दृश्यत इति भाष्यविरुद्धं टीकाकारमतमिति प्रतिभाति । विस्तरेणोपपादिता चास्माभिरेषा प्रक्रिया तैत्तिरीयभाष्यव्याख्यायामितीह विरम्यते ॥

2. अक्षरमेव ॥

3. यद्यज्जायते तत्सर्वम् अक्षरादेव जायते. अतो न किमप्यक्षरव्यतिरेकेण विद्यत इति प्रतिपादनार्थं प्राणादीनां विशेषेणोत्पत्तिः कथ्यत इति भावः ॥

4. 'दिव्यो ह्यमूर्तः' इति सूत्रस्थानीयो मन्त्रः, शिष्टं मुण्डके 'पुरुष एवेदं सर्वम्' (२-१-१०) इति यावद् भाष्यस्थानीयमित्यभिप्रायः ॥

**अक्षरादेव विराडुत्पत्तिः –**

४३. योऽपि[1] प्रथमजात्[2] प्राणात् हिरण्यगर्भात् जायते अण्डस्यान्तर्विराट् स तत्त्वान्तरितत्वेन लक्ष्यमाणोऽपि[3] एतस्मादेव पुरुषात् जायते एतन्मयश्च[4] इत्येतदर्थमाह ॥

तं च विशिनष्टि – अग्निर्द्युलोकः । 'असौ वाव लोको गौतमाग्निः' (छां. ५–४–१) इति श्रुतेः । मूर्धा यस्य उत्तमाङ्गं शिरः । चक्षुषी चन्द्रसूर्यौ[5] । चन्द्रश्च सूर्यश्च इति चन्द्रसूर्यौ । 'यस्य' इति सर्वत्र अनुषङ्गः कर्तव्यः, अस्य इत्यस्य पदस्य वक्ष्यमाणस्य 'यस्य' इति विपरिणामं कृत्वा[6] । दिशः श्रोत्रे यस्य । वाक् विवृताश्च[7] उद्घाटिताः प्रसिद्धा वेदा यस्य । वायुः प्राणो यस्य । हृदयम् अन्तःकरणं विश्वं समस्तं जगत् अस्य । यस्य इत्येतत्[8] । सर्वं हि अन्तःकरणविकारमेव[9] जगत् । मनस्येव सुषुप्ते प्रलयदर्शनात्[10] । जागरितेऽपि तत एव अग्निविस्फुलिङ्गवद्विप्रतिष्ठानात्[11] । यस्य च पद्भ्यां जाता पृथिवी । एष देवो विष्णुः

1. 'यो हि' वा ॥

2. 'एतस्माज्जायते' इति प्रप्रथमं हिरण्यगर्भजन्मोक्तम् । तस्माज्जायमानो विराडप्यक्षराख्यात्पुरुषादेव जायते । अक्षरस्यैव हिरण्यगर्भरूपापन्नस्य तत्कारणतयादित्यर्थः ॥

3. हिरण्यगर्भतत्त्वेन व्यवहितत्वेनावभासमानोऽपि । एवमग्रेऽपि पुरुषकार्यत्वं सर्वस्यापि जायमानस्य बोध्यम् ॥

4. एतदनन्यो वस्तुत एतद्रूपश्चेत्यर्थः ॥

5. आ ॥ वा ॥ पुस्तकयोर्नास्त्ययं शब्दः । अपेक्षितस्तु ॥

6. विश्वमस्य इत्यत्र 'अस्य' इत्यस्य स्थाने 'यस्य' इति पठितव्यम् । तथा च य एवं विशेषणकः स एष विराडपि एतस्मादेव अक्षराख्यात् पुरुषात् जायते इत्यर्थः पर्यवस्यतीति भावः ॥

7. चकारयुक्त एव पाठो मूलानुसारी ॥

8. द्रष्टव्यमधस्तात् 'अस्य' पदस्य टिप्पणम् ॥

9. 'विकार एव' इति भाष्यम्, विकारम् इत्येव तु मुद्रितपुस्तकेषु दृश्यते ॥

10. मनसि लयं गते जगतोऽनुपलम्भादित्यर्थः ॥ गौ. का. भा. ३–३१.

11. सुषुप्ते मन आत्मन्येव प्रलीयते शक्त्यवशेषम् । जागरिते पुनस्तस्मादेव विप्रतिष्ठते बृ. २ १–२० । इत्यतः मन एवेदं जगदित्यभिप्रायः । गौ का भा. ३–३१ ॥

अनन्तः प्रथमशरीरी[1] त्रैलोक्यदेहोपाधिः सर्वेषां भूतानाम् अन्तरात्मा। स हि सर्वभूतेषु द्रष्टा श्रोता मन्ता विज्ञाता सर्वकरणात्मा[2] ॥ ४ ॥

**तस्मादग्निः समिधो यस्य सूर्यः**
**सोमात्पर्जन्य ओषधयः पृथिव्याम्।**
**पुमान्रेतः सिञ्चति योषितायां**
**बह्वीः प्रजाः पुरुषात्संप्रसूताः ॥ ५ ॥**

### अक्षरादेव प्रजासृष्टिः

४४. पञ्चाग्निद्वारेण[3] च याः संसरन्ति प्रजाः,[4] ता अपि तस्मादेव पुरुषात् प्रजायन्त इत्युच्यते ॥

तस्मात् परस्मात् पुरुषात् प्रजावस्थानविशेषरूपोऽग्निः[5]। स विशेष्यते। समिधो यस्य सूर्यः। समिध इव समिधः। सूर्येण हि द्युलोकः समिध्यते। ततो हि **द्युलोकाग्नेः**[6] निष्पन्नात् सोमात् **पर्जन्यः** द्वितीयोऽग्निः संभवति। तस्माच्च पर्जन्यात् ओषधयः **पृथिव्यां** संभवन्ति। ओषधिभ्यः पुरुषाग्नौ हुताभ्यः उपादानभूताभ्यः। **पुमान् अग्निः** रेतः सिञ्चति योषि-

1. स वै शरीरी प्रथमः स वै पुरुष उच्यते। आदिकर्ता स भूतानां ब्रह्माग्रे समवर्तत ॥ (?) इति स्मृतेः ॥

2. स हि प्राणात्मना सर्वभूतानामध्यात्ममवस्थितः। उपाधिभेदादेव तु प्राणविराजोर्भेदः ॥ मु. भा. १-२ २१ ; तै. भा. १-६.

3. छान्दोग्ये (छा. ५-४-१ आरभ्य ५-९-२ पर्यन्तम्) बृहदारण्यके च (बृ. ६-२-९ आरभ्य ६-२-१४ पर्यन्तम्) उपवर्णिता पञ्चाग्निविद्या। तत्र च द्युपर्जन्यपृथिवीपुरुषयोषित्सु पञ्चस्वग्निदृष्टिश्चोदिता। तद्द्वारेणेत्यर्थः ॥

4. अत्र यद्यपि पञ्चाग्निविदः कर्मिण एव प्रजाशब्दवाच्या नेतरे। तथापि सर्वा अपि प्रजाः पुरुषादेव प्रजायन्ते। कर्मिणस्तु गृहीताः प्राधान्येनोपलक्षणार्थम् ॥

5. प्रजा यत्रावतिष्ठन्ते तादृशस्थानविशेषः ॥

6. 'द्युलोकादग्नेः' इति वा ॥

तायां योषिति योषाग्नौ स्त्रियाम् इति । एवं क्रमेण बह्वीः बह्व्यः[1] प्रजाः ब्राह्मणाद्याः पुरुषात् परस्मात्[2] संप्रसूताः समुत्पन्नाः ॥ ५ ॥

**तस्मादृचः साम यजूꣳषि दीक्षा**
**यज्ञाश्च सर्वे क्रतवो दक्षिणाश्च ।**
**संवत्सरश्च यजमानश्च लोकाः**
**सोमो यत्र पवते यत्र सूर्यः ॥ ६ ॥**

**क्रियाकारकफलात्मकं सर्वमपि पुरुषादेव –**

४५. किं च कर्मसाधनानि फलानि च[3] तस्मादेव[4] इत्याह । कथम् ? तस्मात् पुरुषात् ऋचः नियताक्षरपादावसानाः गायत्र्यादिच्छन्दोविशिष्टाः[5] मन्त्राः । साम पाञ्चभक्तिकं साप्तभक्तिकं च[6] स्तोभादिगीतविशिष्टम्[7] । यजूंषि अनियताक्षरपादावसानानि वाक्यरूपाणि । एवं त्रिविधा मन्त्राः[8] । दीक्षाः मौञ्ज्यादिलक्षणाः कर्तृनियमविशेषाः[9] ।

---

1. विभक्तिव्यत्ययेन ॥
2. अक्षराख्यात् परमपुरुषात् ॥
3. यथा प्रजाः कर्मकर्त्र्यः, तथा साधनानि, फलानि चेत्यर्थः ॥
4. तस्मादेव पुरुषात्प्रजायन्ते इति शेषः ॥
5. गायत्री, उष्णिक्, त्रिष्टुप्प्रभृतिच्छन्दोविशिष्टाः ॥
6. हिङ्कारप्रस्तावोद्गीथप्रतिहारनिधनाख्याः पञ्च भक्तयो भागा अवयवा यस्य तत् पाञ्चभक्तिकम् । छा. २-२-१ ; हिङ्कारप्रस्तावाद्युद्गीथप्रतिहारोपद्रवनिधनाख्याः सप्त भक्तयो यस्य तत्साप्तभक्तिकं साम । छां. २-९.
7. स्तोभोऽर्थहीनाक्षरविशेषः हाउकारहाइकारादिः । छां. १-१२-१, २, ३ । स्तोभादीति बहुव्रीहिः ॥ 'गीतिविशिष्टम्' वा. । द्रष्टव्यं सामलक्षणम् शा. भा. २-१-३६.
8. कर्मप्रकाशकाः इति शेषः ॥ १-२-१. भाष्ये 'मन्त्रेषु कर्माणि' इत्यस्य व्याख्यानं द्रष्टव्यम् ॥
9. मौञ्जीबन्धादयो दीक्षाशब्दवाच्याः 'दीक्षा मौञ्ज्यादिलक्षणा कर्तृनियमविशेषा' (आ ॥) इत्यतोऽयमेव वरीयान् पाठ इति भाति ॥

यज्ञाश्च सर्वे अग्निहोत्रादयः । क्रतवः सयूपाः[1] । दक्षिणाश्च एकगवाद्या[2] अपरिमितसर्वस्वान्ताः[3] संवत्सरश्च कालः कर्माङ्गभूतः । यजमानश्च कर्ता । लोकाः तस्य कर्मफलभूताः । ते विशेष्यन्ते[4] — सोमः यत्र येषु लोकेषु पवते पुनाति लोकान्, यत्र येषु सूर्यस्तपति च । ते च दक्षिणायनोत्तरायण-मार्गद्वयगम्या विद्वदविद्वत्कर्तृफलभूताः[5] ॥ ६ ॥

**तस्माच्च देवा बहुधा संप्रसूताः**
**साध्या मनुष्याः पशवो वयांसि ।**
**प्राणापानौ व्रीहियवौ तपश्च**
**श्रद्धा सत्यं ब्रह्मचर्यं विधिश्च ॥ ७ ॥**

### कर्माङ्गान्यपि पुरुषात्

४६. तस्माच्च पुरुषात् कर्माङ्गभूताः देवाः बहुधा वस्वादिगण-भेदेन[6] संप्रसूताः सम्यक् प्रसूताः । साध्याः देवविशेषाः । मनुष्याः कर्माधिकृताः[7] । पशवः ग्राम्यारण्याः । वयांसि पक्षिणः । जीवनं च मनु-

1. पशुबन्धनाय स्थूणाविशेषो यूपः । यज्ञशब्देनात्र यूपरहिता एव ग्राह्या इत्यर्थः ॥
2. 'एकगवाद्यपरिमित' (आ ॥) इति पाठापेक्षया साधीयानयं पाठः ॥
3. विश्वजित्सर्वमेधयोः सर्वस्वदक्षिणा ॥
4. 'यत्र च .... तपति' पा ॥
5. विद्वांस उपासकाः, अविद्वांसस्तु कर्मिणो विवक्षिताः ॥ दक्षिणायनेन चान्द्रपितृलोकप्राप्तिः उत्तरायणेन तु ब्रह्मलोकप्राप्तिः । यद्यपि सर्वमपि क्रियाकारक-फलात्मकं पुरुषादेव भवति तथापि शास्त्रीयाण्येव क्रियाकारकफलान्यत्र अनु-क्रान्तानि । प्रकरणादित्युक्तम् ॥
6. वसवोऽष्टौ, रुद्रा एकादश, मरुतः सप्त, आदित्याश्च द्वादश इत्येवं गणभेदाः ॥
7. मनुष्या हि कर्माधिकृताः । पश्वादीनां तत्र सामर्थ्याभावात् । 'पशूनामशनापिपासे एव विज्ञानम्' ऐ. आ. २-३-२ इति श्रुतेः, तै. भा. २-१. मनुष्यशब्देन चात्र कर्माधिकृता एव विवक्षिता इति भावः ॥ गी. भा. ४-११.

ष्यादीनां प्राणापानौ । व्रीहियवौ हविरर्थौ । तपश्च कर्माङ्गं पुरुषसंस्कार-लक्षणं, स्वतन्त्रं[1] च फलसाधनम् । श्रद्धा यत्पूर्वकः सर्वपुरुषार्थसाधन-प्रयोगः[2], चित्तप्रसादः आस्तिक्यबुद्धिः । तथा सत्यम् अनृतवर्जनम्, यथाभूतार्थवचनं च अपीडाकरम्[3] । ब्रह्मचर्यं मैथुनासमाचारः[4] । विधिश्च इतिकर्तव्यता ॥ ७ ॥

**सप्त प्राणाः प्रभवन्ति तस्मात्**
**सप्तार्चिषः समिधः सप्त होमाः ।**
**सप्त इमे लोका येषु चरन्ति प्राणा**
**गुहाशया निहिताः सप्त सप्त ॥ ८ ॥**

इन्द्रियार्थविज्ञानान्यपि पुरुषादेव भवन्ति –

४७. किं च सप्त शीर्षण्याः[5] प्राणाः तस्मादेव पुरुषात् प्रभवन्ति । तेषां च सप्तार्चिषः दीप्तयः स्वविषयावद्योतनानि[6] । तथा सप्त समिधः सप्त विषयाः । विषयैर्हि समिध्यन्ते[7] प्राणाः । सप्त होमाः तद्विषयविज्ञानानि । 'यदस्य विज्ञानं तज्जुहोति' (तै. ना. ८०) इति

1. पयोव्रतं ब्राह्मणस्येत्यादिकं कर्माङ्गं तपः । वानप्रस्थानां स्वतन्त्रं फलसाधनम् ॥

2. श्रद्धायुक्तस्य कर्मणो वीर्यवत्तरत्वश्रवणात् । छां. १-१-१०.

3. पीडाकरं सत्यवचनमपि त्याज्यमिति भावः ॥

4. स्मरणाद्यष्टाङ्गमैथुनत्यागः ॥

5. 'द्वे श्रोत्रे, द्वे चक्षुषी, द्वे नासिके, एका वाक्' इति सप्त शीर्षण्या इहानुक्रान्ताः तै. सं. ५-१-७ । चत्वारोऽपि मन्तः स्थानभेदात्तु सप्त गण्यन्ते, न तु सप्तैवेत्यभिप्रायेण । एकादशैव तु प्राणा इति निर्धारितम् शारीरके (२-४-६.)

6. 'स्वस्वविषयावद्योतनानि' इति वा ॥

7. समिध्यन्ते आभिरिति समिधः इति व्युत्पत्तिः सूचितात्र ॥

श्रुत्यन्तरात् । किं च सप्त इमे[1] लोका इन्द्रियस्थानानि येषु चरन्ति संचरन्ति प्राणाः इति विशेषणात्[2] । 'येषु चरन्ति'[3] इति प्राणानां विशेषणमिदं प्राणापानादिनिवृत्त्यर्थम्[4] । गुहायां शरीरे हृदये वा स्वापकाले[5] शेरते इति गुहाशयाः । निहिताः स्थापिता धात्रा सप्त सप्त प्रतिप्राणिभेदम्[6] ॥

यानि च 'आत्मयाजिनां'[7] विदुषां कर्माणि तत्साधनानि कर्मफलानि च अविदुषां च कर्माणि तत्साधनानि कर्मफलानि च सर्वं चैतत् परस्मादेव पुरुषात् सर्वज्ञात्[8] प्रसूतम्[9] इति प्रकरणार्थः ॥ ८ ॥

**अतः समुद्रा गिरयश्च सर्वे**
**अस्मात्स्यन्दन्ते सिन्धवः सर्वरूपाः ।**
**अतश्च सर्वा ओषधयो रसश्च**
**येनैष भूतैस्तिष्ठते ह्यन्तरात्मा ॥ ९ ॥**

1. आ ॥ पाठे 'सप्त इमे' इति मूलम्, सप्तेमे इति भाष्यम् । वा ॥ पाठे तु उभयत्र 'सप्तेमे' इत्येव ॥

2. इन्द्रियसंचरणनिर्देशसामर्थ्यात् लोका इह स्थानान्येवेति गम्यते । न तु बाह्या लोका इति ॥

3. 'प्राणा येषु चरन्ति' इति आ ॥

4. न हि प्राणापानादयो शीर्षण्यस्थानेषु चरन्ति । 'पायूपस्थेऽपानः' (प्र. ३-५) इत्यादिषु स्थानान्तरेषु तेषां वृत्तित्वश्रवणात् ॥

5. आत्मग्रामो हि करणानामनेकव्यापारनिमित्तग्लानानां स्वापकाले प्राणग्रस्ता भवन्ति ॥ छां. भा. ६-८-१.

6. 'सप्त सप्त' इति वीप्सार्थः 'प्रतिप्राणिभेदम्' इति ॥

7. 'इदं मेऽनेनाङ्गं संस्क्रियते' (शत. ब्रा ११-२ २-१२) इत्यात्मसंस्कारार्थं नित्यकर्मकर्तार आत्मयाजिनः ते देवयाजिभ्यो विशेषिताः ॥ (शत. ब्र ११ २ २ १४) । मु. भा. ३-३ अव.

8. १ १ ९: अक्षरात् सर्वज्ञात् प्रसूतमिति सूचनार्थं विशेषणम् ॥

9. 'अतः पुरुषाद्व्यतिरिक्तम्' इति शेषः ।

समुद्रादिबाह्यवस्तून्यपि पुरुषादेव –

४८. अतः पुरुषात् समुद्राः सर्वे क्षाराद्याः[1] । गिरयश्च हिमवदादयः[2] अस्मादेव[3] पुरुषात् सर्वे । स्यन्दन्ते स्रवन्ति गङ्गाद्याः[4] सिन्धवः नद्यः सर्वरूपाः बहुरूपाः[5] । (अतश्च[6]) अस्मादेव पुरुषात् सर्वा ओषधयः व्रीहियवाद्याः । रसश्च मधुरादिः षड्विधः । येन रसेन[7] भूतैः पञ्चभिः स्थूलैः[8] परिवेष्टितः तिष्ठते तिष्ठति हि अन्तरात्मा लिङ्गं सूक्ष्मं शरीरम् । तद् हि अन्तराले शरीरस्य आत्मनश्च आत्मवत् वर्तते इति अन्तरात्मा[9] ॥ ९ ॥

### सर्वमिदं पुरुष एव

## पुरुष एवेदं विश्वं कर्म
## तपो ब्रह्म परामृतम् ।
## एतद्यो वेद निहितं गुहायां
## सोऽविद्याग्रन्थिं विकिरतीह सोम्य ॥ १० ॥

---

1. लवणेक्षुसुरासर्पिर्दधिक्षीरजलार्णवाः ॥
2. हिमवत्पारियात्रमलयाद्याः ॥
3. 'अतः' इत्यस्यैव व्याख्यानमिदम् ॥
4. गङ्गायमुनासरस्वत्यादयः ॥
5. नानादिक्कगतिरूपाः ॥
6. इदं लेखकप्रमादात्त्रुटितमप्यपेक्षितम् ॥
7. रसेन ह्युपचितं लिङ्गम् ॥ 'योऽणिष्ठस्तन्मनः' इति श्रुतेः । छां. भा. ६-५-१.
8. स्थूलानि भूतानि पञ्चीकृतानि । तत्तद्भूतवैशेष्यात्तु तत्तदाख्यां लभन्ते । यथा स्थूलपृथिव्यां पृथिव्यंशाधिक्यं स्थूलास्वप्सु अबाधिक्यमित्येवम् । सू. भा. २-४-२२.
9. यथा स्थूलशरीरेऽत्यन्तप्राकृतानामात्मबुद्धिः, एवं मध्यमबुद्धीनां लिङ्गशरीरे उत्तमबुद्धीनां स्वात्मन्येवात्मबुद्धिः ॥

एवं पुरुषात् सर्वमिदं संप्रसूतम् । अतो वाचारम्भणं विकारो नामधेयम् अनृतम् । पुरुष इत्येव सत्यम् । अतः —

४०. पुरुष एवेदं विश्वं सर्वम् । न विश्वं नाम पुरुषादन्यत् किञ्चिदस्ति । अतः यदुक्तं तदेतदभिहितम्[1] 'कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति' (१-१-३) इति । एतस्मिन् हि परस्मिन् आत्मनि सर्वकारणे[2] पुरुषे विज्ञाते पुरुष एवेदं विश्वं नान्यदस्तीति विज्ञातं भवतीति । किं पुनरिदं विश्वमिति ? उच्यते । कर्म अग्निहोत्रादिलक्षणम् । तपः ज्ञानं[3] तत्कृतं फलम् अन्यत्[4] । एतावद् हि इदं सर्वम्[5] । तच्चैतद् ब्रह्मणः कार्यम् । तस्मात् सर्वं ब्रह्म परामृतम् । परम्[6] अमृतम् अहमेवेति[7] यो वेद निहितं स्थितं गुहायां हृदि सर्वप्राणिनां[8] स एवं विज्ञानात् अविद्याग्रन्थिं ग्रन्थिमिव दृढीभूताम् अविद्यावासनाम्

1. उक्तप्रायम् । कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवतीति पृष्टे· यत्पुरुष एवेदं सर्वमित्युक्तं तेनास्मिन् ज्ञाने ज्ञातव्यमन्यन्नावशिष्यते इत्युक्तं भवतीत्यभिप्रायः ॥ गी. ७-२.

2. सर्वकारणत्वमेव हेतुः, तज्ज्ञाने सर्वज्ञत्वप्राप्तौ । कारणे हि ज्ञाते कार्यं ज्ञातं भवति । सर्वकारणं चेदमिति ॥

3. ज्ञानं सामान्यतः सर्वविषयकं ज्ञानम् ॥

4. ज्ञानमत्र तत्कृतं फलमभिप्रेतमिति भावः ॥

5. न हि कर्मज्ञानतत्कृतफलव्यतिरिक्तं किञ्चिदस्ति ॥

6. ब्रह्मव्यतिरिक्तमपरममृतम् । इदं तु परममृतम् स्वभावेनामृतत्वात् ॥

7. ब्रह्मैवेदं विश्वमिति ज्ञानं परोक्षमत्र न विवक्षितम् किन्तु मत्प्रत्यगात्माभिन्नं ब्रह्मैवेदमिति ब्रह्मात्मभावज्ञानमेवेत्यभिप्रायः ॥

8. बुद्ध्याख्यया स्थितमित्यर्थः ॥ तै. भा. २-१.

विकिरति विक्षिपति विनाशयति इह जीवन्नेव न मृतः सन्[1] हे सोम्य, प्रियदर्शन ॥ १० ॥

इत्याथर्वणमुण्डकोपनिषद्भाष्ये द्वितीयमुण्डके प्रथमः खण्डः

1. अद्वितीयब्रह्मात्मज्ञानात् सद्योमुक्तिर्भवति । न तु ज्ञानकर्मसमुच्चयानुष्ठानादिव कालान्तरिता मुक्तिरिति भावः ॥ ३-२-९, का. भा २-३-१४, १५ बृ. भा. ४-४-६ ( ब्रह्माप्येतीत्यस्य भाष्यम् ) ॥

# द्वितीयमुण्डके द्वितीयः खण्डः

## अक्षराधिगमोपायः

**आविः सन्निहितं गुहाचरं नाम**
**महत्पदमत्रैतत्समर्पितम् ।**
**एजत्प्राणन्निमिषच्च यदेतज्जानथ सद-**
**सद्वरेण्यं परं विज्ञानाद्यद्वरिष्ठं प्रजानाम् ॥ १ ॥**

सर्वविकल्पास्पदस्वयंप्रकाशात्मरूपमक्षरम् –

५०. अरूपं[1] सत् अक्षरं केन प्रकारेण विज्ञेयमिति ? उच्यते- आविः प्रकाशं[2] सन्निहितम् वागाद्युपाधिभिः । 'ज्वलति भ्राजति' (?) इति श्रुत्यन्तरात् । शब्दादीन् उपलभमानवत् अवभासते[3] । दर्शनश्रवण-मननविज्ञानाद्युपाधिधर्मैराविर्भूतं सत् लक्ष्यते हृदि सर्वप्राणिनाम्[4] । यदेतत् आविर्ब्रह्म[5] सन्निहितं सम्यक् स्थितं हृदि तद् गुहाचरं नाम

1. रूपाद्याकाररहितं निर्विशेषमिति यावत् ॥ सू. भा. ३-२-१४.

2. स्वयंप्रकाशमित्यर्थः ॥

3. जीवभावापन्नमिवावभासते । वस्तुतस्तु न शब्दाद्युपलब्धिविशेष-धर्मवदिति भावः ॥ सू. भा. १-२-२० ; गी. भा. १३-१४.

4. तथा च यदेव स्वयंप्रकाशं चैतन्यं जलसूर्यकादिवद् द्रष्ट्रादिरूपेण इह कार्यकरणसंघाते प्रविष्टमिवावभासते, येनैव च चैतन्यप्रकाशस्वभावेन रूपरस-गन्धादिकं विजानाति लोकः, यच्च सर्वान्तःकरणसाक्षितयावस्थितं तदेवाक्षरमिति विज्ञेयमिति भावः ॥ प्र. भा. ४-९, का. भा. २-१-३, छां. भा. ८-१२-४, बृ. भा. १-४-७.

5. स्वप्रकाशं ब्रह्मेत्यर्थः । 'आविः' इत्यस्यैव ब्रह्मेत्यर्थकथनम् । 'आविर्भूतम्' इति वा पाठोऽपेक्षितः ॥

गुहायां[1] चरति इति[2] दर्शनश्रवणादिप्रकारैः । गुहाचरम् इति प्रख्यातम्[3] । महत् सर्वमहत्त्वात् । पदं पद्यते सर्वेण इति[4] । सर्वपदार्थास्पदत्वात्[5] । कथं[6] तत् 'महत्पदम्' इति ? उच्यते । यतः, अत्र अस्मिन् ब्रह्मणि एतत् सर्वं समर्पितं संप्रवेशितम्[7] रथनाभाविव अराः । एजत् चलत् पक्ष्यादि । प्राणत् प्राणितीति प्राणापानादिमत् मनुष्यपश्वादि । निमिषच्च यन्निमेषादिक्रियावत् । यच्च अनिमिषत् । चशब्दात्[8] । समस्तमेतत् अत्रैव ब्रह्मणि समर्पितम्[9] । एतत् यदास्पदं सर्वं जानथ[10] हे शिष्याः अवगच्छथ तदात्मभूतं[11] भवतां सदसत्स्वरूपम्[12] सदसतोः मूर्तामूर्तयोः

1. हृदये ॥

2. गुहायां हृदि चरतीति गुहाचरम् । इतिर्भिन्नक्रमः । दर्शनश्रवणादिप्रकारैश्चरतीति इति सम्बन्धो द्रष्टव्यः ॥

3. नामेत्यस्य व्याख्यानमिदम् ॥

4. पद्यते प्राप्यते सर्वेण स्वाधाररूपेणेति पदम् ॥

5. सर्वपदार्थानामत्रैव विकल्पितत्वादित्यर्थः । पदार्थानामिति पदानां तदर्थानां चेति वा अर्थः । द्रष्टव्यं मां. २ भाष्यम् । तथा च रज्जुरिव सर्पादीनां यत्सर्वविकल्पास्पदं तदक्षरमिति विज्ञेयमित्यभिप्रायः ॥

6. महत्पदमिति कथमवगम्यते ?

7. 'प्रवेशितम्' इति 'सं'रहितः पाठः आ॥

8. चशब्दादनिमिषत् स्थावरम् इत्यपि द्रष्टव्यम्, स्थावरजङ्गमात्मकं सर्वमपि समर्पितमक्षरे इत्यर्थलाभायेत्यर्थः ॥

9. एतदाश्रयमेतत्प्रयुक्तप्रवृत्तिमच्चेत्यर्थः ॥

10. रज्जुशुक्तिकादिवत् सर्परजतादीनाम् एतदेव सर्वविकल्पस्यास्पदमिति जानथेत्यर्थः । अरनाभिदृष्टान्तेन अक्षराश्रितं सर्वमपि वस्तुभूतमिति मा भूद्भ्रान्तिरिति 'आस्पदम्' इत्युक्तम् ॥

11. आत्मभूतत्वादेव सुविज्ञेयम् अरूपमपीति भावः ॥

12. सर्वात्मकमित्यर्थः । अत्र दरत्सम्बन्धितयैव विद्यते तत्सत्, यत्तु तथा न वर्तते तदसत् गुणभूतम् । अथवा कार्यकारणे सदसती । तत्र कार्यं नामरूपविशेषवत्त्वात् सत्, असच्च कारणमव्याकृतम् इति गी. भा. ९-१९, तै. भा. २-७; इह तु मूर्तामूर्ते व्याकृताव्याकृतोभयरूपे विवक्षिते ॥

स्थूलसूक्ष्मयोः तद्व्यतिरेकेणाभावात्[1] वरेण्यं वरणीयम् । तदेव हि सर्वस्य नित्यत्वात् प्रार्थनीयम्[2] । परं व्यतिरिक्तं विज्ञानात् 'प्रजानाम्' इति व्यवहितेन संबन्धः । यत् लौकिकविज्ञानागोचरम् इत्यर्थः[3] । यद् वरिष्ठं वरतमं सर्वपदार्थेषु वरेषु । तद् हि एकं ब्रह्म अतिशयेन परं सर्वदोषरहितत्वात्[4] ॥ १ ॥

यदर्चिमद्यदणुभ्योऽणु च
    यस्मिँल्लोका निहिता लोकिनश्च ।
तदेतदक्षरं ब्रह्म
    स प्राणस्तदु वाङ्मनः ।
तदेतत्सत्यं तदमृतं
    तद्वेद्धव्यं सोम्य विद्धि ॥ २ ॥

सर्वाश्रयभूतेऽक्षरे चित्तसमाधानं कर्तव्यम् –

किं च यदर्चिमत् दीप्तिमत् । तद्दीप्त्या हि आदित्यादि दीप्यते[5] इति दीप्तिमत् ब्रह्म । किं च यदणुभ्यः श्यामाकादिभ्योऽपि[6] अणु च सूक्ष्मम् । चशब्दात् स्थूलेभ्योऽपि अतिशयेन स्थूलं पृथिव्या-

1. तद्भिन्नस्यैव अकिंचित्त्वादित्यर्थः । अत एव सदसत्प्रतिषेधेन तज्ज्ञाप्यते ॥ गी. भा. १३-१२, बृ. भा. २-३-१, २-३-६ (नेति नेति).

2. बृ. १-४-८.

3. प्रजानां विज्ञानात्, इन्द्रियमनोजन्यात् परं व्यतिरिक्तम्, अगोचरम् इत्यर्थः ॥

4. [illegible] सर्वदोषासंपृक्तत्वात् इत्यर्थः ॥

5. आदित्याद्यधिदैवतं तदनुगृहीतचक्षुरादिकमध्यात्मं च तस्य चैतन्य [illegible] हि भासते । २-२-१०, गी. भा. १५-१२.

6. अणुभूताः श्यामाकादयः [illegible] इत्यर्थः ॥ का. भा. १-२-२०.

दिभ्यः[1] । यस्मिन् लोका भूरादयः निहिताः स्थिताः[2] । ये च लोकिनः लोकनिवासिनः । मनुष्यादयः । चैतन्याश्रया हि सर्वे प्रसिद्धाः[3] । तदेतत् सर्वाश्रयम् अक्षरं ब्रह्म । स प्राणः[4] । तद् उ वाङ्मनः । वाक्च मनश्च । सर्वाणि च करणानि तत् उ अन्तश्चैतन्यम्[5] । चैतन्याश्रयो हि प्राणेन्द्रियादिसर्वसंघातः[6] । 'प्राणस्य प्राणम्' (बृ. ४-४-१०) इति श्रुत्यन्तरात् । यत् प्राणादीनाम् अन्तश्चैतन्यम् अक्षरम् तदेतत् सत्यम् अवितथम्[7] । अतः अमृतम् अविनाशि[8] । तत् वेद्धव्यं मनसा ताडयितव्यम् । तस्मिन् मनसः समाधानं कर्तव्यम् इत्यर्थः[9] । यस्मात् एवम्, हे सोम्य, विद्धि अक्षरे चेतः समाधत्स्व ॥ २ ॥

**धनुर्गृहीत्वौपनिषदं महास्त्रं**
**शरं ह्युपासानिशितं सन्दधीत[10] ।**

1. श्यामाकादिभ्योऽणीयानिति परिच्छिन्नपरिमाणत्वं न शङ्क्यमिति पृथिव्यादिभ्योऽपि ज्यायानिति च शब्दबलाद्द्रष्टव्यम् । तेन कालाकाशादीनामपि व्यापकत्वादनन्तत्वं फलतीति भावः ॥ छां भा. ३-१४-३.

2. 'अत्रैतत्समर्पितम्' इति पूर्वमन्त्रोक्तन्यायेन स्थिताः ॥

3. सकलजगज्जन्मकारणमक्षरमित्युक्तं प्राक् । इदानीं तु सर्वस्यापि स्थितिकारणमाश्रयभूतमपीत्युच्यते ॥ गी. भा. ९-४.

4. स्वरूपेण 'अप्राणः' प्राणस्याप्येतज्जन्यत्वात् इत्युक्तम् । इदानीं प्राणस्यापि प्रत्यगात्मत्वात् अक्षरं प्राणः इत्युच्यते ॥

5. के. भा. १-२.

6. संहतं हि परार्थमिति तदाश्रयभूतं अक्षरं चैतन्यं यदर्थं तद्व्यापार इत्यर्थः ॥ के. भा. २-२, ऐ. भा. १-११.

7. प्राणादिसकलविकल्पास्पदत्वात् न शून्यं तदित्यर्थः ॥ मां. भा. ७.

8. यदि विकल्पमात्रमभविष्यत् तर्हि दृष्टनष्टस्वरूपत्वाद्विनाश्यपि अभविष्यत् । द्रष्टव्यं तै. भा. २-१ भाष्ये सत्यशब्दविवरणम् ॥

9. मनो हि यद्यत् पुनःपुनश्चिन्तयति तत्रैव समाधीयते । अतः निरन्तरचिन्तनेन मनःसमाधानं कर्तव्यमिति 'वेद्धव्यम्' इत्यस्यार्थ इति भावः ॥

10. 'सन्धयीत' इति मूले भाष्ये च क्वा॥

प्रणवो धनुः शरो ह्यात्मा
ब्रह्म तल्लक्ष्यमुच्यते ।
अप्रमत्तेन वेद्धव्यं
शरवत् तन्मयो भवेत् ॥ ४ ॥

५३. यदुक्तं धनुरादि तदुच्यते[1] । प्रणव ओङ्कारः धनुः । यथा इष्वासनं लक्ष्ये शरस्य प्रवेशकारणं तथा आत्मशरस्य अक्षरे लक्ष्ये प्रवेशकारणम् ओङ्कारः[2] । प्रणवेन हि अभ्यस्यमानेन[3] संस्क्रियमाणः[4] तदालम्बनोऽप्रतिबन्धेन[5] अक्षरे अवतिष्ठते । यथा धनुष अस्तः इषुर्लक्ष्ये[6] अतः प्रणवो धनुरिव धनुः । शरो हि आत्मा उपाधिलक्षणः[7]

1. इदं तदिति विशेषेणोच्यत इत्यर्थः ॥

2. मां. १२. 'संविशत्यात्मनाऽऽत्मानं य एवं वेद' ॥

3. अभ्यासश्च द्वेधा । ओङ्कारालम्बनेन तदावेशितब्रह्मभावचिन्तितेन कालान्तरे लोकान्तरे मुक्त्यासादनार्थं तद्भावनारूपः, ओङ्कारवाच्यब्रह्मवस्तु-विमर्शनसामर्थ्यार्थं तन्मात्रात्रयविमर्शनं चेति । अत्र विचारासमर्थस्य प्रणवमवलम्ब्य ब्रह्मैकत्वे चित्तसमाधानं क्रममुक्तिफलमुपदिष्टमिति व्याख्याकारः । तदसत् । परविद्याधिकारात् । अदृष्टफलगमकशब्दाभावाच्च । माण्डूक्योपनिषदुपदिष्टविधया अक्षरप्राप्त्युपाय एव प्रधानतया निर्दिष्ट इति युक्तमुत्पश्यामः । प्रश्ने (प्र. ५) कतमं वाव स तेन लोकं जयतीत्युपक्रमसामर्थ्यात् क्रममुक्त्यर्थकचिन्तनमेव प्रधानमिति च । पश्यन्तु भूमिकाम् ॥

4. प्रणवमात्रार्थानुसन्धानेन या अन्तःकरणस्यात्मतत्त्वावगतियोग्यतापत्तिः, सैवास्य संस्कारः ॥

5. देहेन्द्रियप्राणमनोबुद्ध्यहङ्काररूपोपाध्यात्मभाव एव प्रतिबन्ध अक्षरावगतेः । स च प्रणवमात्रार्थपरिशीलनेनापगच्छतीत्यप्रतिबन्धेनाक्षरात्मन्यवस्थानं प्राप्नोतीत्यर्थः ॥

6. धनुषो बलादेव हीषुर्लब्धवेगो लक्ष्येऽवस्थानं प्राप्नोति ॥

7. चक्षुराद्युपाधिभिर्द्रष्टृत्वादिरूपं भजमान इव लक्ष्यमाणः । प्र. भा. ४-९ गी. भा. १८-१४.

पर एव जले सूर्यादिवत्, इह प्रविष्टः देहे सर्वबौद्धप्रत्ययसाक्षितया[1] । सः पर एव स्वात्मत्वेन आपन्नोऽक्षरे ब्रह्मणि । अतः ब्रह्म तत् लक्ष्यम् उच्यते । लक्ष्यं इव मनः समाधित्सुभिः आत्मभावेन लक्ष्यमाणत्वात्[2] । तत्र एवं सति अप्रमत्तेन बाह्यविषयोपलब्धितृष्णाप्रमादवर्जितेन सर्वतो विरक्तेन[3] जितेन्द्रियेण एकाग्रचित्तेन वेद्धव्यं ब्रह्म लक्ष्यम् । ततः तद्वेधनादूर्ध्वं शरवत् तन्मयो भवेत् । यथा शरस्य लक्ष्यैकात्मत्वं फलं भवति, तथा देहाद्यात्मप्रत्ययतिरस्करणेन अक्षरैकात्मत्वं फलम् आपादयेत्[4] इत्यर्थः ॥ ४ ॥

**यस्मिन्द्यौः पृथिवी चान्तरिक्ष-**
**मोतं मनः सह प्राणैश्च सर्वैः ।**
**तमेवैकं जानथ आत्मान-**
**मन्या वाचो विमुञ्चथामृतस्यैष सेतुः ॥ ५ ॥**

कथं निदिध्यासितव्यम् ? –

५४. अक्षरस्यैव दुर्लक्ष्यत्वात् पुनःपुनर्वचनं सुलक्षणार्थम्[5] यस्मिन् अक्षरे पुरुषे द्यौः पृथिवी च अन्तरिक्षं च ओतं समर्पितम्, मनश्च

1. पर एव ह्यविकृतः कार्यकरणसंघाते प्रविष्टो जीवत्वेन विभाव्यते मूढैः ॥ तै. भा. २-६. बृ. भा. १-४-७. सू. भा. १-४-२२, २-३-१७.

2. यथा विद्धव्यं लक्ष्यं धन्विभिः संधानेनैव स्वात्मना गृह्यते, तथा प्रणवाद्युपायेन मनःसमाधित्सुभिः अक्षरमेव लक्ष्यते । तदेवम् आत्मभावेन योगिभिर्लक्ष्यत इति ब्रह्म लक्ष्यमित्युच्यते इत्यभिप्रायः ॥

3. गीताध्यानयोगः काठकोक्त अध्यात्मयोगः, गौडपादकारिकोक्तो मनोनिग्रहोपायश्च अत्रानुसन्धातव्यः ॥

4. नित्यसिद्धाक्षरैकात्म्यमविद्याकृतदेहाद्यात्मप्रत्ययतिरस्कारेणैव लभ्यत इति भावः ॥ गी. भा. १८-५०. अत्र ब्रह्मात्मैकत्वे चित्तसमाधानं विधीयत इति व्याख्या तु निःप्रमाणिका आत्मविरुद्धा चेति स्फुटम् ॥

5. सुखेनावगमार्थम् ॥

सह प्राणैः करणैरन्यैः सर्वैः, तमेव सर्वाश्रयम्[1] एकम् अद्वितीयम्[2] जानथ जानीथ हे शिष्याः। आत्मानं प्रत्यक्स्वरूपं युष्माकं सर्वप्राणिनां च[3]। ज्ञात्वा च अन्या वाचः अपरविद्यारूपाः विमुञ्चथ विमुञ्चत[4] परित्यजत। तत्प्रकाश्यं च सर्वं कर्म ससाधनम्[5]। यतः अमृतस्य एष सेतुः। एतदात्मज्ञानम्[6] अमृतस्य अमृतत्वस्य मोक्षस्य प्राप्तये सेतुरिव सेतुः। संसारमहोदधेरुत्तरणहेतुत्वात्। तथा च श्रुत्यन्तरम् 'तमेव विदित्वा अतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय' (श्वे. ३-८, ६-१५). इति[7] ॥ ५ ॥

## अरा इव रथनाभौ संहता यत्र नाड्यः
## स एषोऽन्तश्चरते बहुधा जायमानः।

1. यद्यपि सर्वाश्रयत्वं पूर्वमेवोक्तं 'यस्मिँल्लोका निहिता लोकिनश्चे'ति (२-२-२), तथापि तदेव ध्यानफलत्वेन ज्ञेयमित्युपदिश्यतेऽत्रेति न दोषः॥

2. ब्रह्मैवेदं सर्वमिति (२-२-११) इति वक्ष्यमाणं विद्यया प्रपञ्च-प्रविलापनेन एकमेव प्रत्येतव्यमित्युपदेशार्थम्। अत एवात्र एकमद्वितीयं जानथेत्युक्तमिति भावः॥ सू. भा. १-३-१.

3. प्रतीच्येव हि निरुपपद आत्मशब्दो रूढः। बृ. भा. ३-४-१, का. भा. २-१-१. आत्मस्वोपदेशादेनेह नार्थान्तरं प्रधानादिकं परिग्रहीतव्यमिति निर्णीतं शारीरके (१-३-१).

4. लकारव्यत्ययश्छान्दस इति भावः॥

5. वेदसंन्यासो न कर्तव्य इति वाद एतच्छ्रुतिविरुद्ध इति भावः॥ स-साधनमिति यज्ञोपवीतादित्यागो गृह्यते॥ बृ. भा. ३-५-१. अन्या वाच इत्युक्त्या परविद्याप्रकाशका अनुज्ञायन्त इत्यवगम्यते॥ बृ. भा. ४-४-२१.

6. यद्यपि सेतुशब्दो विधारणार्थकत्वेनैव ब्रह्मपर इत्यवगन्तुं शक्यते तथापि 'तमेवैकं जानथ आत्मानम्' इत्युपदिष्टस्य ज्ञानपरतया नयनं स्वरसतर-मिति भावः॥ सू. भा. १-३-१.

7. 'एष सेतुः' इत्यवधारणार्थक इति 'नान्यः पन्थाः' इति श्रुत्यन्त-रादवगम्यत इति भावः॥

# ओमित्येवं ध्यायथ आत्मानं
# स्वस्ति वः पाराय तमसः परस्तात् ॥ ६ ॥

हृदयमध्ये ध्यातव्य आत्मा –

किं च । अरा इव यथा रथनाभौ समर्पिता अराः एवं संहताः[1] संप्रविष्टाः[2] यत्र यस्मिन् हृदये[3] सर्वतो देहव्यापिन्यो नाड्यः, तस्मिन् हृदये बुद्धिप्रत्ययसाक्षिभूतः स एष प्रकृतः[4] आत्मा अन्तः मध्ये चरते चरति[5] वर्तते । पश्यन् शृण्वन् मन्वानो विजानन् बहुधा अनेकधा क्रोधहर्षादिप्रत्ययैर्जायमान इव जायमानः । अन्तःकरणोपाध्यनुविधायित्वात्[6] । वदन्ति हि लौकिका हृष्टो जातः क्रुद्धो जात इति[7] । तमात्मानम् ओमित्येवम् ओङ्कारालम्बनाः[8] सन्तः, यथोक्तकल्पनया[9] ध्यायथ चिन्तयत । उक्तं वक्तव्यं च शिष्येभ्य आचार्येण

1. सुसंबद्धाः सुषुम्नाद्या नाड्यः । का. भा. २-३-१६, छां. भा. ८-६-६. संसारब्रह्मलोकादिगमनार्थत्वात् तासां तत्सम्बद्धे तत्रैव हृदये साक्षात्कृतमक्षरं सर्वात्मनैव भवतीत्याशयेन नाडीपरामर्शः ॥ का. भा. २-३-१६.
2. संहता इत्यस्य व्याख्यानमिदम् ॥
3. नाडीसंबन्धाद्धृदयमिह विवक्षितं गम्यत इति भावः ॥
4. परमात्मा ह्यत्र प्रकृतः । स एव चात्र 'एषः' इति समीपतरवाचिना परामृश्यत इति भावः ॥
5. आत्मनेपदप्रयोगश्छान्दस इति भावः ॥
6. तत्तद्वृत्त्यनुविधायित्वात् तत्तद्रूपेण जायमान इव भवति । अविवेकिभिस्तु तथैव रूपान्तरं भजत इत्यभिमन्यत इत्यर्थः ॥
7. स एष लौकिकः प्रयोगो हर्षादिभिस्तादूप्यभाक्त्वं व्यनक्तीति भावः ॥
8. 'ओमित्येवम्' इत्यनेन यद्यपि प्रतीकोपासनमेव प्रतीयते तथापि प्रकरणानुसारेण ओङ्काराश्रयणेन तदर्थविमर्शनमेवात्र प्राधान्येन विवक्षितमिति न विस्मर्तव्यम् ॥
9. धनुरादिकल्पनया । तादृशकल्पनानुसारेणेत्यभिप्रायः । न ह्यत्र धनुरादिकल्पना विधीयते ॥

जानना[1] । शिष्याश्च ब्रह्मविद्या(!)विविदिषुत्वात् निवृत्तकर्माणो मोक्षपथे प्रवृत्ताः । तेषां निर्विघ्नतया[2] ब्रह्मप्राप्तिम् आशास्त्या (!) चार्यः । स्वस्ति निर्विघ्नमस्तु वः युष्माकं पाराय[3] परकूलाय । परस्तात्, कस्मात्[4] ? अविद्यातमसः । अविद्यारहितब्रह्मात्मस्वरूपगमनाय इत्यर्थः[5] ॥ ६ ॥

**यः सर्वज्ञः सर्ववि-**
**द्यस्यैष महिमा भुवि ।**
**दिव्ये ब्रह्मपुरे ह्येष**
**व्योम्न्यात्मा प्रतिष्ठितः ॥ ७ ॥**

आत्मा हृदयाकाशे उपलभ्यते --

५६. योऽसौ तमसः परस्तात् संसारमहोदधिं तीर्त्वा गन्तव्यः परविद्याविषयः[6] । स कस्मिन् वर्तत इति ? आह --

'यः सर्वज्ञः सर्वविद्' व्याख्यातः[7] । तं पुनर्विशिनष्टि । यस्य एष प्रसिद्धः[8] महिमा विभूतिः । कोऽसौ महिमा ? यस्येमे द्यावापृथिव्यौ

1. बहुवचनप्रयोगेणैषोऽर्थो गम्यत इत्याशयः ॥

2. न हि कर्मणा देवानामुपचरितुर्बहुपशुस्थानीयस्य पुरुषस्य कर्मसन्न्यसनं देवानां प्रियम् । तस्मात्ते मुमुक्षूणां ब्रह्मप्राप्तौ विघ्नं कुर्युरिति निर्विघ्नतामाशास्ते इत्यभिप्रायः ॥ बृ. भा. १-४-१०.

3. 'पराय' (आ ॥) इत्यतोऽयं साधीयान् पाठः ॥

4. 'पाराय परकूलाय । कस्य ? अविद्यातमसः परस्तात्' इति (आ॥) पाठः॥

5. यत्तत् तमसः परस्तात् परं कूलम्, अविद्यारहितं ब्रह्मात्मस्वरूपं तदधिगमाय वः स्वस्ति, तदधिगमो निर्विघ्नो भवत्वित्याशीर्गुरोः ॥

6. अस्यानन्तरम् 'इति' इत्यधिकमनपेक्षितं च आ ॥ अत्र सर्वज्ञत्व-मनोमयत्वादिगुणविशिष्टब्रह्मणो हृदयपुण्डरीके ध्यानं क्रममुक्तिफलं मन्दब्रह्मविदो विधीयत इति केचित् । तदसत् । परविद्याप्रकरणविच्छेदे कारणाभावात्, 'परविद्याविषयः' इति भाष्याक्षरविरोधाच्च ॥

7. सामान्येन चैतन्यात्मना जानातीति सर्वज्ञः, विशेषेण च व्यष्टि-विज्ञानात्मज्ञानेन वेत्तीति सर्ववित् इति प्रथममुण्डकचरममन्त्रभाष्ये व्याख्यात इत्यर्थः ॥

8. लोकशास्त्रप्रसिद्ध इत्यर्थे 'एषः' इति भावः ॥

तद्विज्ञानेन परिपश्यन्ति धीरा
आनन्दरूपममृतं यद्विभाति[1] ॥ ८ ॥

हृदये दृष्टस्यात्मनः सर्वतो दर्शनम् –

५७. स हि आत्मा तत्रस्थो मनोवृत्तिभिरेव विभाव्यत[2] इति मनोमयः । मनउपाधित्वात् । प्राणशरीरनेता । प्राणश्च तत् शरीरं च प्राणशरीरम्[3] । तस्य अयं नेता । स्थूलात्[4] शरीरात् शरीरान्तरं[5] प्रति । प्रतिष्ठितः अवस्थितः अन्ने भुज्यमानान्नविपरिणामे प्रतिदिनम् उपचीयमाने अपचीयमाने च पिण्डरूपान्ने[6] हृदयं बुद्धिं पुण्डरीकच्छिद्रे सन्निधाय समवस्थाप्य । हृदयावस्थानमेव हि आत्मनः स्थितिः । न हि आत्मनः स्थितिरन्ने[7] । तत् आत्मतत्त्वं विज्ञानेन विशिष्टेन शास्त्राचार्योपदेश-

1. आनन्दाश्रममुद्रितपुस्तके (७-८) मन्त्रद्वयमपि समुच्चित्यैकत्वेन परिगणितम् ॥

2. मनोवृत्तिभिः स्वस्वविषयेषु प्रवृत्ताभिस्ततोनिवृत्ताभिर्वा तत्साक्षि-तया विभाव्यत इत्यर्थः ॥ के. २-४.

3. क्रियाशक्त्यात्मकं लिङ्गशरीरमत्र प्राणशरीरम् । 'प्राणश्च शरीरं च' (आ ॥) इत्यपपाठः । छां. भा. ३-१४-२. 'प्राणशरीरः' इत्यस्य व्याख्या द्रष्टव्या ॥

4. 'अस्मात् स्थूलात्' वा ॥

5. 'सूक्ष्मम्' (वा॥) इत्यधिकं पठ्यते क्वचित् । तत्त्वनपेक्षितम् । प्राणशरीरमेव हि सूक्ष्मम् । तस्यायं परमात्मा स्थूलशरीरात् स्थूलशरीरान्तरं प्रति नेता । आत्मसान्निध्यबलादेव सूक्ष्मशरीरं शरीरान्तरं गच्छतीत्यभिप्रायः । तेनैव हि जीवात्मा शरीरात् शरीरं गच्छतीति व्यवहारविषयो भवति । सू. भा. ३-१-१; गौ. का. ३-९.

6. शरीरे ॥

7. आत्मा सर्वगतः सर्वाधारश्चेति तस्य शरीरे स्थितिरिति नावकल्पते । हृदयं बुद्ध्याख्यं तु शरीरेऽस्तीति तदुपाधिकत्वद्वारा आत्माप्यन्ने प्रतिष्ठित इत्युच्यते इत्यभिप्रायः ॥ प्र. भा. ४-२ अन्तःशरीरे इत्यस्य व्याख्या द्रष्टव्या॥

**हृदयग्रन्थिः** अविद्यावासनाप्रचयो[1], बुद्ध्याश्रयः कामः[2]। 'कामा येऽस्य हृदि श्रिताः' (बृ. ४-४७, का. २-३-१४) इति श्रुत्यन्तरात् हृदयाश्रयोऽसौ नात्माश्रयः[3]। भिद्यते भेदं विनाशम् आयाति। छिद्यन्ते सर्वज्ञेयविषयाः संशयाः[4] लौकिकानाम् आमरणात्[5] गङ्गास्रोतोवत् प्रवृत्ताः विच्छेदम् आयान्ति। अस्य विच्छिन्नसंशयस्य निवृत्ताविद्यस्य[6] यानि विज्ञानोत्पत्तेः प्राक्तनानि जन्मान्तरे च[7] अप्रवृत्तफलानि ज्ञानोत्पत्ति-

1. २-१-१० अविद्याग्रन्थिरिति प्राक् अविद्यावासना ग्रन्थिवद् दृढीभूता अभिहिता। इदानीं हृदयग्रन्थिरिति तत्प्रचितः काम उच्यते। अविद्याया उत्तरत्रोपादानादिति भावः॥

2. अत्राविद्यावासनाप्रचयो भिद्यत इति कोऽर्थः? इत्याक्षिप्य चित्तन्त्रानाद्यविद्यावादावतारः कृतः कैश्चित्। स तु 'हृदयाश्रयोऽसौ नात्माश्रयः' इति भाष्यस्पष्टोक्तिविरुद्ध इत्युपेक्ष्यः। चिदाश्रिताविद्यावादविमर्शस्तु भूमिकायां द्रष्टव्यः॥

3. हृदयाश्रय एव कामो नात्माश्रय इति वैशेषिकाणां वेदान्त्येकदेशिनां च आत्माश्रितकामवादनिरसनपूर्वकं का. भा. २-३-१४, बृ. भा. ४-३ २२ (शोकान् हृदयस्येत्यस्य व्याख्याने), ४-४ ७ (कामा येऽस्य हृदि श्रिताः इत्यस्य व्याख्याने), गी. भा. १३-६ इत्यादिभाष्येषु प्रतिपादितम्॥

4. आत्मेतरेषां ज्ञेयाभासत्वात्, आत्मज्ञानादेव ते सर्वे ज्ञाता भवन्तीति, सर्वज्ञेयविषयाः संशयाश्छिद्यन्त इत्युक्तम्॥ 'सर्वे ज्ञेयविषयाः' इति (पा॥) पाठे तु आत्मा अस्ति वा न वा, अस्तित्वेऽपि देहादिलक्षणो वा तद्व्यतिरिक्तो वा, व्यतिरिक्तत्वेऽपि एको वा नैको वा इत्यादयः सर्वे परमज्ञेयपरमात्मविषयाः संशया इति व्याख्येयम्। एष एव च पाठो युक्ततर इति भाति॥

5. आमरणात् इति मरणसीमाकरणं संशयानां सातत्येनानुवृत्तिद्योतनार्थम्, न तु मरणकाले तेषां विच्छेदप्रतिपादनार्थम्। न ह्यात्मज्ञानं विना तेषां विच्छेदः सम्भवति। सुप्तप्रतिबुद्धन्यायेन जन्मान्तरेऽपि तेषामनुवृत्तेरपरिहार्यभावात्॥

6. संशया इत्युपलक्षणमज्ञानविपरीतज्ञानयोरपि। अतः संशयच्छेदशब्देन सर्वाविद्यानिवृत्तिरेवोच्यत इति भावः॥

7. ज्ञानोत्पत्तेः प्रागस्मिन् जन्मनि जन्मान्तरे च कृतानि॥

सहभावीनि च[1] क्षीयन्ते[2] कर्माणि । न तु एतज्जन्मारम्भकाणि । प्रवृत्त-फलत्वात्[3] । तस्मिन् सर्वज्ञे असंसारिणि परावरे परं च कारणात्मना अवरं च कार्यात्मना तस्मिन् परावरे[4] साक्षात् 'अहमस्मि' इति दृष्टे[5] संसारकारणोच्छेदात्[6] मुच्यते इत्यर्थः ॥ ९ ॥

**हिरण्मये परे कोशे**
**विरजं ब्रह्म निष्कलम् ।**
**तच्छुभ्रं ज्योतिषां ज्योति-**
**स्तद्यदात्मविदो विदुः ॥ १० ॥**

१०. उक्तस्यैवार्थस्य[7] संक्षेपाभिधायका उत्तरे मन्त्रास्त्रयोऽपि । हिरण्मये ज्योतिर्मये बुद्धिविज्ञानप्रकाशे[8] परे कोशे कोश इव असेः,

1. आगामिकर्माण्यपि ॥

2. निर्बीजीक्रियन्ते ॥ गी. भा. ४-३७.

3. बाधितानुवृत्तं तु मिथ्याज्ञानम् आरब्धकर्मानुवृत्तिं सावकाशीकरोतीत्यर्थः । सू. भा. ४-१-१५, गी. भा. ४-३७, १८-६६, बृ. १-४-७, १-४-१० इत्यादिस्थलेषु प्रारब्धकर्मणां भोगादेव क्षय उक्त एवमेवोपपादनीयः । अद्वैतविद्याचार्याभावशङ्का च तावतैव परिहियते ॥ छां. भा. ६-१४-२.

4. सर्वात्मके इत्यर्थः ॥

5. अयमहमस्मि इत्यनुभव एव तस्य दर्शनं न तु साक्षाद्विषयीकरणमिति भावः ॥

6. अविद्याकामकर्मविनाशादित्यर्थः ॥

7. हृदये सकलबौद्धप्रत्ययसाक्षितया विज्ञायमानस्यैव कूटस्थचैतन्य-स्वरूपस्य स्वयं प्रकाशस्याद्वैतात्मता । न तु तद्व्यतिरिक्तं किञ्चिदस्तीत्ययमुक्तोऽर्थः ॥

8. बुद्धेर्विज्ञानानां प्रत्ययानां प्रकाशश्चैतन्याभासकृतोऽत्र वर्तत इति बुद्धि-विज्ञानप्रकाशं हृदयपुण्डरीकम् ॥ द्रष्टव्यं २-२-७ मन्त्रे 'दिव्ये' इत्यस्य भाष्यम् ॥

आत्मस्वरूपोपलब्धिस्थानत्वात्[1] । परं तत् (?)[2] सर्वाभ्यन्तरत्वात्[3] । तस्मिन् विरजम् अविद्याद्यशेषदोषरजोमलवर्जितं[4] ब्रह्म सर्वमहत्त्वात् सर्वात्मत्वाच्च[5] । निष्कलं निर्गताः कलाः यस्मात् तत् निष्कलम्[6] । निरवयवम् इत्यर्थः । यस्मात् विरजं निष्कलं च अतः, तत् शुभ्रं शुद्धं ज्योतिषां सर्वप्रकाशात्मनाम् अग्न्यादीनामपि तत् ज्योतिः अवभासकम्[7] । अग्न्यादीनामपि ज्योतिष्ट्वम् अन्तर्गतब्रह्मात्मचैतन्यज्योतिर्निमित्तम् इत्यर्थः[8] । तद् हि परं ज्योतिः यदन्यानवभास्यम् आत्मज्योतिः[9] । तत् यत् आत्मविदः आत्मानं स्वं शब्दादिविषयबुद्धिप्रत्ययसाक्षिणं ये विवेकिनो विदुः विजानन्ति, ते आत्मविदः तद्विदुः आत्मप्रत्ययानुसारिणः[10]

1. यथा असिः कोशान्तरुपलभ्यते, एवमात्मापि बुद्ध्यभ्यन्तरे उपलभ्यते इति बुद्धिः कोशरूपकेणोपन्यस्यते ॥

2. तत् इत्यनन्तरं हृदयमिति त्रुटितः शब्दः ॥

3. देहेन्द्रियप्राणमनसां पूर्वपूर्वाभ्यन्तरे स्थितानां सर्वेषामप्यभ्यन्तरत्वात् परोऽयं कोशः ॥ गौ. का. भा. ३-११.

4. अविद्याकामकर्मरहितम् ॥

5. सर्वमाप्नोतीत्यात्मा । अतोऽपि ब्रह्म ॥

6. षष्ठप्रश्नानुक्रान्तास्तु (पु. ६-४) प्राणादिकला ब्रह्मप्रभवत्वाच्च परमार्थतस्तस्येति निष्कलमेव तत् ॥

7. ज्योतिःशब्दोऽवभासकाभिधायीति भावः ॥ सू. भा. १-१-२४.

8. न हि चैतन्येन विना अग्न्यादयोऽप्यवभासन्ते ॥

9. सर्वस्यापि चैतन्यावभास्यत्वात्, चैतन्यावभासस्य चान्यानपेक्षणात् 'ज्योतिषां ज्योतिः' इत्युच्यत इत्यभिप्रायः ॥

10. आत्मत्वेन विदन्तीत्यात्मविदः । आत्मप्रत्ययानुसारिणः, द्रष्टृत्वश्रोतृत्वादिविशेषं परित्यज्य सर्वव्यापकचित्स्वरूप आत्मेत्येवंरूपं प्रत्ययमनुसरन्तीति । द्रष्टृत्वादिप्रत्ययानुसारिणो हि बाह्यविषयप्रत्ययानुसारिण इति न सर्वसाक्षिणं वेदितुं प्रभवन्ति ॥ मां. भा. ७; बृ. भा. ( 'आत्मेत्येवोपासीत' इत्यस्य व्याख्या ) १-४-७.

यस्मात् परं ज्योतिरन्यस्मात्, त एव तद्विदुः, नेतरे बाह्यार्थप्रत्ययानुसारिणः[1] ॥ १० ॥

**न तत्र सूर्यो भाति न चन्द्रतारकं**
**नेमा विद्युतो भान्ति कुतोऽयमग्निः ।**
**तमेव भान्तमनुभाति सर्वं**
**तस्य भासा सर्वमिदं विभाति ॥ ११ ॥**

६०. कथं तत् 'ज्योतिषां ज्योतिः' इति? उच्यते — न तत्र तस्मिन् स्वात्मभूते[2] ब्रह्मणि सर्वावभासकोऽपि सूर्यः भाति । तद्ब्रह्म न प्रकाशयतीत्यर्थः । स हि तस्यैव भासा सर्वम् अन्यत् अनात्मजातं प्रकाशयति[3] । न तु तस्य स्वतः प्रकाशनसामर्थ्यम् । तथा न चन्द्रतारकम् । न इमा विद्युतः भान्ति । कुतः अयमग्निः अस्मद्गोचरः? किं बहुना? यत् इदं जगत् भाति तत् तमेव परमेश्वरं स्वतः भारूपत्वात् भान्तं दीप्यमानम् अनुभाति अनुदीप्यते[4] । यथा जलोल्मुकादि अग्निसंयोगात् अग्निं दहन्तमनु दहति[5] न स्वतः । तद्वत् तस्यैव भासा दीप्त्या सर्वमिदं सूर्यादि जगत् विभाति । यत एवं तदेव ब्रह्म भाति च विभाति च[6] कार्यगतेन

1. त एव हि परमात्मज्योतिषा दीपितानि वागादिसर्वकरणानि स्वस्वकार्यं निर्वर्तयन्तीति विदुः । प्रतिबोधसाक्ष्यात्मभावेनावस्थितत्वात् । के. २-४ ; इतरे तु तद्दीपितबाह्यप्रत्ययानुसारित्वात् तैरेव करणैः सर्वं ज्योतिष्कार्यं निर्वर्तयामहे इति ततोऽपि बाह्यतरज्योतिर्भिः सूर्यादिभिर्वा इति विदुः ॥ बृ. ४-३-६.
2. सूर्यस्वात्मभूते ॥
3. प्रकाशयति 'इत्यर्थः' इत्यधिकम् आ ॥
4. एतन्मन्त्रार्थः शारीरके (१-३-२२) वितत्य चिन्तितः ॥
5. न हि जलोल्मुकादिगतदाहकत्वमग्निदाहकत्वव्यतिरिक्तं किञ्चित् ॥
6. सूर्यादिरूपेणापि विविधं भाति चेत्यर्थः । असद्गोचरत्वेन विस्पष्टं भातीति वा ॥ का. भा. २-२-१४, १५.

विविधेन भासा, अतः तस्य ब्रह्मणः भारूपत्वं स्वतः अवगम्यते[1] । न हि स्वतः अविद्यमानं भासनम् अन्यस्य कर्तुं शक्नोति । घटादीनाम् अन्यावभासकत्वादर्शनात्, भारूपाणां च आदित्यादीनां तद्दर्शनात्[2] ॥ ११ ॥

**ब्रह्मैवेदममृतं पुरस्ता-**
**द्ब्रह्म पश्चाद्ब्रह्म दक्षिणतश्चोत्तरेण ।**
**अधश्चोर्ध्वं च प्रसृतं**
**ब्रह्मैवेदं विश्वमिदं वरिष्ठम् ॥ १२ ॥**

**ब्रह्मैव परमार्थसत्यम् –**

६१. यत्तत् ज्योतिषां ज्योतिर्ब्रह्म तदेव सत्यम्, सर्वं तद्विकारः वाचारम्भणं विकारो नामधेयमात्रम् अनृतमितरत्[3] इत्येतमर्थं विस्तरेण हेतुतः[4] प्रतिपादितं निगमनस्थानीयेन[5] मन्त्रेण पुनरुपसंहरति ॥

ब्रह्मैव उक्तलक्षणम् (अमृतम्)[6] इदं यत् पुरस्तात्, अग्रे

1. स्वत एव, न त्वन्यापेक्षमिति निश्चीयते ॥

2. अतो दृष्टानुरोधेनापि स्वयंप्रकाशं ब्रह्मेत्यनुमेयमित्यर्थः । एतच्च लोकबुद्धिमनुसृत्योक्तम् । विद्वद्दृष्ट्या तु स्वयंप्रकाशत्वम् अपरोक्षमेव ॥

3. छां. ६-१-४, ७-४-१ इत्यादि श्रुत्यर्थपरामर्शोऽयम् ॥

4. ब्रह्मणः सकाशादेव जातत्वादितरद्वाचारम्भणमात्रमनृतमिति हेतुतः प्रतिपादितम् ॥

5. परापरविद्याविभागेन 'यत्तदद्रेश्यम्' इत्यादिना संक्षेपेणोक्तमेव पुनरपि तदेतत्सत्यमित्यादिना विस्तरेण प्रतिपादितम् । तदेवात्रोपसंह्रियते इति निगमनमिदम् । 'हेत्वपदेशात्प्रतिज्ञायाः पुनर्वचनं निगमनम्' (न्या. सू. १-१-३९) इति हि न्यायविदः । यद्यपि नायं केवलानुमानेनोपपादितोऽर्थः, किं त्वागमबलादेव प्रत्यायितः, तथापि हेत्वपदेशात्परस्तादुपसंहार इत्यंशे निगमनमिव भवतीति द्योतयितुं निगमनस्थानीयेनेत्युक्तम् ॥

6. उक्तलक्षणमिति सर्वजगत्कारणं प्रत्यस्तमितसर्वविशेषं सर्वावभासकमित्यर्थः । अत्र अमृतमिति लेखकप्रमादात्प्रच्युतं पदम् ॥

अब्रह्मेव[1] अविद्यादृष्टीनां प्रत्यवभासमानम् । तथा पश्चाद् ब्रह्म । तथा दक्षिणतश्च । तथा उत्तरेण । तथैव अधस्तात् उर्ध्वं च सर्वतोऽन्यदिव कार्याकारेण प्रसृतं प्रगतं नामरूपवत्[2] अवभासमानम् । किं बहुना ? ब्रह्मैवेदं विश्वं समस्तम् इदं जगत् वरिष्ठं वरतमम्[3] । **अब्रह्मप्रत्ययः सर्वः अविद्यामात्रः, रज्ज्वामिव सर्पप्रत्ययः[4], ब्रह्मैव एकं परमार्थसत्यम् इति वेदानुशासनम्[5]** ॥ १२ ॥

इत्याथर्वणमुण्डकोपनिषद्भाष्ये द्वितीयमुण्डके द्वितीयः खण्डः
द्वितीयमुण्डकं समाप्तम्

1. 'ब्रह्मैव' इति पाठो न ग्राह्यः । अब्रह्मेव प्रत्यवभासमानमपि परमार्थदृष्ट्या ब्रह्मैवेत्यर्थः ॥
2. वस्तुतस्तु नच नामरूपम् । ब्रह्मणोऽनन्यत्वात्, व्यभिचरद्रूपत्वाच्चेति भावः ॥
3. तद्धि सर्वस्मात्प्रियतरम् अविनाशित्वात् ॥ बृ. भा. १-४-८.
4. यदाहुर्मण्डनादयः सर्वप्रत्ययवेद्यं ब्रह्मेति (ब्र. सि ४-३) तदेवमेव ज्ञेयम् ॥
5. वेदानुशासनत्वात् तस्यैव ज्ञेयमित्यभिप्रायः ॥

# तृतीयमुण्डके प्रथमः खण्डः

**उत्तरग्रन्थसम्बन्धः –**

६२. परा विद्या उक्ता यया तदक्षरं पुरुषाख्यं सत्यम् अधिगम्यते। यदधिगमे हृदयग्रन्थ्यादिसंसारकारणस्य आत्यन्तिको विनाशः स्यात्। तद्दर्शनोपायश्च योगः[1] धनुराद्युपादानकल्पनया[2] उक्तः। अथ इदानीं तत्सहकारीणि[3] सत्यादिसाधनानि वक्तव्यानि इति तदर्थः उत्तरग्रन्थारम्भः। प्राधान्येन[4] तत्त्वनिर्धारणं च प्रकारान्तरेण क्रियते, अत्यन्तदुरवगाहत्वात् कृतमपि[5] ॥

**द्वा सुपर्णा सयुजा सखाया**
**समानं वृक्षं परिषस्वजाते ।**
**तयोरन्यः पिप्पलं स्वाद्व-**
**त्त्यनश्नन्नन्योऽभिचाकशीति ॥ १ ॥**

---

1. ध्यानयोगः, निदिध्यासनापराभिधानः ॥

2. उक्तः इति धनुर्ग्रहणमन्त्रे (२-२-३) इति शेषः। आदिशब्दो भिन्नक्रमः धनुरुपादानादिकल्पनयेति। तेन च शरसंधानादिर्गृह्यते ॥

3. योगसहकारीणि इत्यर्थः। यदा तु तच्छब्देन परविद्यैव गृह्यते तदा तदुत्पत्तिसाधनत्वेनैव सहकारित्ववाचोयुक्तिरिति व्याख्येयमाश्रमकर्माधिकरणन्यायेन ॥ सू. भा. ३-४-३३; के. भा. ४-७.

4. साधनविधानमेवोत्तरग्रन्थस्य प्रधानम्, तत्त्वनिरूपणं तु गुणभूतमित्यभिप्रायः ॥

5. ननु कृतमेव तत्त्वनिर्धारणं तत्किं पुनः कृतकरणेनेत्याशङ्क्याह अत्यन्तदुरवगाहत्वादिति। अतो न पौनरुक्त्यं शङ्क्यमिति च भावः ॥ गी. भा. २-२४.

६३. तत्र[1] सूत्रभूतो मन्त्रः[2] परमार्थवस्त्ववधारणार्थम् उपन्यस्यते ॥

द्वा द्वौ सुपर्णा सुपर्णौ । शोभनपतनौ सुपर्णौ । पक्षिसामान्याद्वा सुपर्णौ[3] । सयुजा सयुजौ सहैव सर्वदा युक्तौ[4] । सखाया सखायौ[5] समानाख्यानौ समानाभिव्यक्तिकारणौ[6] । एवंभूतौ सन्तौ समानम् अविशेषम् उपलब्ध्यधिष्ठानतया[7] एकं वृक्षं वृक्षमिव उच्छेदनसामान्यात्[8] शरीरं वृक्षं परिषस्वजाते परिष्वक्तवन्तौ सुपर्णाविव एकं वृक्षं फलोपभोगार्थम्[9] । अयं हि वृक्षः ऊर्ध्वमूलः अवाक्शाखः अश्वत्थः अव्यक्तमूलप्रभवः[10] क्षेत्रसंज्ञकः सर्वप्राणिकर्मफलाश्रयः[11] । तं परिष्वक्तवन्तौ

---

1. प्रकारान्तरेण तत्त्वनिर्धारणे कर्तव्ये इत्यर्थः ॥

2. मन्त्रश्चायं समनन्तरोत्तरश्च श्वेताश्वतरे (४-६, ७) दृश्यते । अयं ऋग्वेदे मं. १. अ. २२. सू. १६४-१७. अथर्ववेदे च (९-५-२०) उपलभ्यते । आथर्वणत्वाच्चोपनिषदोऽस्याः अथर्ववेदादेवोद्धृतोऽयम् इत्यनुमीयते ॥

3. सुपर्णौ इति सुपतनौ इत्यर्थे यौगिकशब्दमङ्गीकृत्य शोभनपतनौ इति व्याख्यानम् । तस्मिन् पक्षे जीवस्य शोभनपतनत्वं यथाकर्म यथाश्रुतमिति कथंचिद्योज्यम् । रूढ्याश्रये तु नैव क्लेश इत्याह पक्षिसामान्याद्वा इति ॥

4. जीवस्येश्वर एव परमार्थस्वरूपमिति नित्ययुक्तत्वं जीवस्येश्वरेण ॥

5. 'सुपर्णा', 'सयुजा', 'सखाया' इत्येतेषु द्विवचनस्याऽऽकारश्छान्दसः॥

6. सहचरत्वस्य 'सयुजा' इत्यनेनैव गतत्वात् समानख्यातिरेव सखिशब्दप्रवृत्तिनिमित्तत्वेन व्याख्यायते । शरीर एव द्वावप्यभिव्यज्येते इति समानाभिव्यक्तिकारणौ ॥

7. शरीरमेव हि समानं द्वयोरप्युपलब्ध्यधिष्ठानम् ॥ प्र. ६-२.

8. व्रश्चनाद् वृक्षः ॥ का. भा. २-३-१.

9. जीवः फलोपभोगार्थम्, ईश्वरस्तु भोगप्रदानार्थमिति विवेकः । फलोपभोगार्थमिति भाष्यं तु छत्रिन्यायेन नेतव्यम् ॥ एकेनापि हि छत्रिणा सह गच्छन्तश्छत्रिणो गच्छन्तीति व्यपदेशभाजो भवन्ति ॥

10. अव्याकृताख्या माया ॥ सू. भा. १-४-२, ३ ; गीताभाष्ये (१५-१) उदाहृतो ब्रह्मवृक्षोऽप्यानुसंधेयः ॥

11. शरीरं ह्याश्रित्य प्राणिनः संचरन्तीति श्रुत्यन्तरगतं संसारवृक्षवर्णनमिह परामृष्टम् ॥

सुपर्णाविव अविद्याकामकर्मवासनाश्रयलिङ्गोपाध्यात्मेश्वरौ[1] । तयोः परिष्वक्तयोः अन्यः एकः क्षेत्रज्ञः लिङ्गोपाधिः[2] वृक्षमाश्रितः पिप्पलं कर्मनिष्पन्नं सुखदुःखलक्षणं फलं स्वादु अनेकविचित्रवेदनास्वादरूपं[3] स्वादु अत्ति भक्षयति उपभुङ्क्ते अविवेकतः[4] । अनश्नन् अन्यः इतरः नित्यशुद्धबुद्धमुक्तस्वभावः सर्वज्ञः सर्वसत्त्वोपाधिः[5] ईश्वरः नाश्नाति । प्रेरयिता ह्यसौ उभयोः भोज्यभोक्त्रोः नित्यसाक्षित्वसत्तामात्रेण[6] । स तु अनश्नन् अन्यः अभिचाकशीति पश्यत्येव केवलम् । दर्शनमात्रं हि तस्य प्रेरयितृत्वं राजवत्[7] ॥ १ ॥

**समाने वृक्षे पुरुषो निमग्नोऽ**
**नीशया शोचति मुह्यमानः ।**
**जुष्टं यदा पश्यत्यन्यमीशमस्य**
**महिमानमिति वीतशोकः ॥ २ ॥**

---

1. सोपाधिक आत्मा हि लिङ्गोपाधिद्वारा अविद्याकामकर्माश्रयः । स चेश्वरश्चेह स्थितौ इत्यर्थः ॥

2. 'लिङ्गोपाधिवृक्षम्' इति मुद्रितपुस्तकेऽपपाठः ॥

3. 'स्वादु' इति भोगवैचित्र्यमुच्यते इत्यर्थः ॥

4. स्वरूपलिङ्गोपाध्योरितरेतरस्वभावाविवेकतः । इतरेतराध्यासादिति यावत् ॥

5. निर्मलसत्त्वानामेव हि साक्षिस्वरूपं तदुपहिततया उपलब्धिगोचरी भवतीति सर्वसत्त्वोपाधिरीश्वरः । यद्यप्यक्षरं स्वेन स्वभावेन निरुपाधिकमेव तथापि जीवेश्वरभेद उपाधिकृत इति ज्ञापनार्थं सर्वसत्त्वोपाधिरित्युक्तम् । बृ. भा. ३-८-१२, सू. भा. १-२-२० । 'सत्त्वोपाधिः' इति 'सर्व' पदरहितपाठेऽप्ययमेवार्थः । जगत्कारणत्वविवक्षया तु अविद्याकृतनामरूपबीजमायोपाधिक इतीश्वरो वर्ण्यते ॥ सू. भा २-१-१४.

6. न तु स्वव्यापारेणापीति मात्रशब्दार्थः ॥

7. राज्ञोऽव्यापृतस्यैव प्रेरणया यथा भृत्याः स्वव्यापारेषु वर्तन्ते, एवमीश्वरस्याव्यापृतस्यैव कूटस्थदर्शनरूपप्रेरणमात्रेण भोग्यभोक्त्रोः प्रवृत्तिरित्येतावत्यंशे राजदृष्टान्तो बोध्यः । दृष्टान्तो हि राज्ञि गौणमेव सन्निधिमात्रेण कर्तृत्वम् । धनधान्यादिदानेनापि भृत्यप्रेरणदर्शनात् ॥

## आत्मदर्शनेन वीतशोकत्वम् –

६४. तत्र एवं सति[1] समाने वृक्षे यथोक्ते शरीरे पुरुषो भोक्ता जीवः अविद्याकामकर्मफलरागादिगुरुभाराक्रान्तः अलाबुरिव सामुद्रे जले निमग्नः निश्चयेन (मग्नः)[2] देहात्मभावमापन्नः 'अयमेवाहम् अमुष्य पुत्रः, अस्य नप्ता, कृशः, स्थूलः, गुणवान्, निर्गुणः, सुखी, दुःखी' इत्येवंप्रत्ययः[3] नास्त्यन्योऽस्मात् इति[4] जायते म्रियते संयुज्यते वियुज्यते च सम्बन्धिबान्धवैः[5]। अतः अनीशया 'न कस्यचित् समर्थोऽहम्, पुत्रो मम विनष्टः, मृता मे भार्या, किं मे जीवितेन?' इत्येवं दीनभावः अनीशा[6]। तया शोचति सन्तप्यते । मुह्यमानः अनेकैरनर्थप्रकारैः अविवेकितया[7] चिन्ताम्[8] आपद्यमानः । स एवं प्रेततिर्यङ्मनुष्यादियोनिषु आजवं जवी-

1. वर्णितरीत्या सुपर्णरूपके जीवेश्वरपरतया गृहीते सतीत्यर्थः । यद्यपि पैङ्गिरहस्यब्राह्मणमाश्रित्येयं ऋक्सत्त्वक्षेत्रज्ञपरतया शारीरके (१-२-१२) व्याख्याता द्वितीयवर्णके, तथापि 'जुष्टं यदा पश्यत्यन्यमीशम्' इतीशदर्शनकर्तृत्वश्रुतिबलात् प्रथमवर्णकमपि नात्यन्तमनपेक्षितं भाष्ये । अत एव ह्युत्तरत्र 'इयदामननात्' इत्यधिकरणभाष्ये 'द्वा सुपर्णा' इति 'ऋतं पिबन्तौ' इति च विद्यैकत्वमिति सिद्धान्तितम् ॥ (सू. भा. ३-३ ३४).

2. इदं पदं त्रुटितं मुद्रितपुस्तकेषु, अपेक्षितं तु निमग्नशब्दव्याख्यानाय ॥

3. इत्येवमात्मानमन्यथा गृह्णन् इत्यर्थः ॥ गौ. का. १-१६.

4. अस्मात्परं स्वरूपं मे नास्तीति मत्वा इत्यर्थः ॥ का. भा. १-२-६.

5. नदीस्रोतोगतकाष्ठद्वयसंयोगवियोगवदेव कर्मवशात्संयोगवियोगौ इति भावः ॥

6. अत्र 'ईश्वरभावाप्रतिपत्तिरनीशा आवरणम्, शोचतीति विक्षेपः, तदुभयहेतुरनिर्वाच्यमज्ञानं मोहः' इति व्याख्यानं भाष्यबहिर्भूतमित्युपेक्ष्यम् । भाष्यसम्मतं व्याख्यानं तु शोकः इति इष्टं वस्तूद्दिश्य चिन्तयतो यदरमणम् । मोह इति विपरीतप्रत्ययप्रभवोऽविवेकः इति द्रष्टव्यं (बृ. भा. ३-५-१) कहोलप्रश्नभाष्यम् ॥

7. 'अविवेकतया' इति प्रामादिकः पाठः ॥

8. 'अन्तर्भिन्नाम्' इति वा ॥

भावम्[1] आपन्नः कदाचित् अनेकजन्मसु शुद्धधर्मसञ्चितनिमित्ततः[2] केनचित् कारुणिकेन[3] दर्शितयोगमार्गः[4] अहिंसासत्यब्रह्मचर्यसर्वत्यागशमदमादिसंपन्नः[5] समाहितात्मा[6] सन् जुष्टं सेवितम् अनेकैर्योगमार्गैः कर्मभिश्च[7] यदा यस्मिन् काले पश्यति ध्यायमानः अन्यं वृक्षोपाधिलक्षणात् विलक्षणं[8] ईशम् असंसारिणं अशनायापिपासाशोकमोहजरामृत्य्वतीतम्[9] ईशं सर्वस्य जगतः[10] 'अयमहमस्मि आत्मा सर्वस्य समः सर्वभूतस्थः[11]', नेतरोऽविद्याजनितोपाधिपरिच्छिन्नो मायात्मा इति विभूतिं महिमानं च

---

1. अविरतसंसरत्स्वभावं घटीयन्त्रवत् इत्यर्थः । अयं शब्दो प्रस्थानत्रयभाष्ये न क्वचिदपि दृश्यते अन्यत्र । जैनबौद्धग्रन्थेषु प्रचुरोऽस्य प्रयोगः ॥

2. 'संचितशुद्धधर्मनिमित्ततः' इति भिन्नक्रमः संचितशब्दः । संचयार्थको वा ॥

3. करुणैव हि केवलं गुरोरुपदेशप्रवृत्तौ प्रयोजकम् ॥ मां. का. भा. १-१६, ऐ. भा. १-२, (ब्रह्म ततममपश्यत् इत्यस्य व्याख्यानावसरे), बृ. भा. २-१-२०, ४-४-१५. (राजपुत्राख्यायिकायाम्), छां. भा. ६ १४ २ (आचार्यवान्) ॥

4. आत्मचिन्तनोपायो योगमार्गः । प्राक् (२-२-४, ६) उपदिष्टः ॥

5. वक्ष्यमाणसाधनसंपन्नः इत्यर्थः ॥

6. समाहितान्तःकरणः । सत्यादिसाधनानुष्ठानेन ध्यानयोग्यतामापन्न इति यावत् ॥

7. 'कर्मिभिश्च' इत्यसाधुः पाठः । कर्मभिर्बहिरङ्गैश्चित्तशुद्धिमापन्नोऽन्तरङ्गैर्निवृत्तिधर्मैर्योगमार्गैः प्रत्यक्प्रवणतां प्राप्तस्तैः करणभूतैर्जुष्टमीशं यदा पश्यतीत्यर्थः ॥

8. अन्यमित्यस्य व्याख्यानमिदम् । नात्र जीवादन्यन्तमन्यं परमात्मानं बोधयति श्रुतिः, किं तु शारीराद्विलक्षणम् । अविद्याकल्पिताजीवभावाद्विलक्षणं स्वरूपं प्रतिपादयितुमेव हि शास्त्राचार्यप्रवृत्तिः ॥ सू. भा. १-३-१९.

9. समुद्रोर्मिवदनवरतं वर्तमाना अशनायादय एव हि संसारः । आत्मनः संसारित्वं नामरूपविकारकार्यकरणलक्षणसंघातोपाधिभेदसम्पर्कजनितभ्रान्तिमात्रं तद्विलक्षणत्वं च स्वतः ॥ बृ. भा. ३-५-१.

10. प्रत्यस्तमितसर्वविशेषं ब्रह्मैव जगदपेक्षया ईश इति भावः ॥ सू. भा. ३-४-२, ३-४-८.

11. गी. १३-२७.

जगद्रूपं अस्यैव मम परमेश्वरस्य[1] इति यदा एवं द्रष्टा[2], तदा वीतशोको भवति सर्वस्मात् शोकसागरात् विप्रमुच्यते कृतकृत्यो भवतीत्यर्थः[3] ॥ २ ॥

**यदा पश्यः पश्यते रुक्मवर्णं**
**कर्तारमीशं पुरुषं ब्रह्मयोनिम् ।**
**तदा विद्वान् पुण्यपापे विधूय**
**निरञ्जनः परमं साम्यमुपैति ॥ ३ ॥**

६५. अन्योऽपि मन्त्रः इममेवार्थम् आह सविस्तरम् — यदा यस्मिन् काले । पश्यः पश्यतीति । विद्वान्[4] साधक इत्यर्थः । पश्यते पश्यति[5] पूर्ववत्[6] । रुक्मवर्णं स्वयंज्योतिःस्वभावम् । रुक्मस्येव वा ज्योतिरस्य अविनाशि[7] । कर्तारं सर्वस्य जगतः ईशं पुरुषम्, ब्रह्मयोनिम् ब्रह्म च तद् योनिश्च असौ ब्रह्मयोनिः । तं ब्रह्मयोनिम्[8] । ब्रह्मणो वा

1. 'यस्यैष महिमा भुवि' (२-२-७) इत्यत्र भाष्यवर्णितो महिमा ममैव तदनन्यस्येत्यर्थः । अस्य महिमानमिति न सम्बन्धः, किंतु महिमानम् अस्य (मम) इतीति । एवं यथोक्तमन्त्रेणास्याप्येकवाक्यता भवति । तत्रापि परमात्मानो ब्रह्मपुरे हृदयपुण्डरीके व्योम्नि प्रतिष्ठितत्वेन प्रत्यगात्माभिन्नत्ववर्णनादिति भावः । सर्वस्य जगतः परमात्मविभूतित्वं स्मृतावपि वर्णितम् ॥ गी. १०-४२.

2. यदा द्रष्टा इत्यनेन दर्शनस्य दौर्लभ्यं द्योत्यते ॥

3. तरति हि तरति शोकमात्मविदिति ॥ छां. ७-१-३.

4. ज्ञानमेव हि दर्शनं न चक्षुर्व्यापारफलमिति भावः । तै. ना. (१-१-३).

5. आत्मनेपदं छान्दसम् ॥

6. पुष्टं पश्यतीति भाष्योक्तविधया ॥

7. रुक्मं हि नित्यप्रकाशस्वभावमिति लोकप्रसिद्धिः । तद्वदात्मेति दृष्टान्तेन विवक्षितं न स्वरूपस्याकारस्य यथाश्रुतं रुक्मवर्णत्वमात्मन उपपद्यत इति भावः ॥

8. 'भूतयोनिं परिपश्यन्ति' (१-१-६) इति हि प्रतिज्ञातम् ॥

अपरस्य योनिम्[1] । स यदा च एवं पश्यति तदा स विद्वान् पश्यः पुण्यपापे बन्धनभूते कर्मणी समूले[2] विधूय निरस्य दग्ध्वा[3] निरञ्जनः निर्लेपः विगतक्लेशः[4] परमं प्रकृष्टं निरतिशयं साम्यं समताम् अद्वयलक्षणाम्। द्वैतविषयाणि साम्यानि अतोऽर्वाञ्च्येव[5] । अतः अद्वयलक्षणम् एतत् परमं साम्यम् उपैति प्रतिपद्यते[6] ॥ ३ ॥

**प्राणो ह्येष यः सर्वभूतैर्विभाति**
**विजानन् विद्वान् भवते नातिवादी ।**
**आत्मक्रीड आत्मरतिः क्रियावान्**
**एष ब्रह्मविदां वरिष्ठः ॥ ४ ॥**

**ज्ञानी नातिवादी भवति –**

६६. किं च योऽयं प्राणस्य प्राणः[7] पर ईश्वरः हि एषः प्रकृतः[8] सर्वभूतैः सर्वैर्भूतैः ब्रह्मादिस्तम्बपर्यन्तैः । इत्थंभूतलक्षणे[9]

---

1. प्रथमजस्य हिरण्यगर्भस्य उत्पत्तिकारणम् । श्वे. ५-६, बृ. ५-४-१.
2. अविद्याकामरूपमूलसहिते इत्यर्थः ॥
3. निःशेषीकृत्य । आत्मरूपतामापाद्येति यावत् । तै. भा. ३-९.
4. अविद्यारागद्वेषभयमोहादिरहितः ॥ सू. भा. १-३-२.
5. हीनतराण्येव । सगुणब्रह्मप्राप्तिरपि हि जगद्व्यापारवर्जं भोगमात्रसाम्यं सातिशयम् । ४-४-१७, १८, २१ । अतोऽपरमाणि तानि साम्यानि ॥ भिन्नदेशत्वादिना असाम्यत्वस्यापि सत्त्वात् । अतस्तदपेक्षयेदमद्वयं परमं साम्यम् । नित्यप्राप्ततदैक्यरूपत्वात् ॥
6. सम्यग्दर्शनमात्रेणेति शेषः । असाम्यस्याज्ञानकृतत्वात् ॥
7. यद्यपि प्राणोऽपि क्रियोपाधिः सर्वभूतैर्विभातीति वक्तुं शक्यते तथाप्यक्षराख्यः पुरुषस्तस्यापि प्राणत्वात् तदात्मत्वेन तस्यापि प्राणनशक्त्याभावकत्वात् स एव मुख्यवृत्तेन सर्वभूतात्मा इति भावः । के. भा. १-२, बृ. भा. ४-४-१८.
8. पुरुषो हि प्रकृतः, न प्राणः । अतः प्राणस्य प्राण इति व्याख्यानमिति भावः ॥
9. न तु करणार्थे ॥

तृतीया । सर्वभूतस्थः सर्वात्मा सन् इत्यर्थः । विभाति विविधं दीप्यते[1] । एवं सर्वभूतस्थं यः साक्षात् आत्मभावेन[2] 'अयमहमस्मि' इति विजानन् वाक्यार्थज्ञानमात्रेण[3] स[4] भवते भवति । न भवतीत्येतत्[5] । किम् ? अतिवादी । अतीत्य सर्वान् अन्यान् वदितुं शीलम् अस्य इति अतिवादी । यस्तु एवं साक्षात् आत्मानं प्राणस्य प्राणं विद्वान् अतिवादी स न भवति[6] इत्यर्थः । सर्वं यदा आत्मैव नान्यदस्ति इति दृष्टम्, तदा किं हि असौ अतीत्य वदेत् ? यस्य तु अपरम् अन्यत् दृष्टमस्ति स तदतीत्य वदति । अयं तु विद्वान् नात्मनोऽन्यत् पश्यति, नान्यत् शृणोति, नान्यत् विजानाति[7] । अतो नातिवदति[8] ॥

## ज्ञानी स्वात्मतृप्तः –

६७. किं च आत्मक्रीडः आत्मन्येव क्रीडा क्रीडनं यस्य नान्यत्र पुत्रदारादिषु स आत्मक्रीडः । तथा आत्मरतिः आत्मन्येव[9] रतिः रमणं

1. ब्रह्मादिभूतरूपेणेत्यर्थः ॥
2. साक्षात् एवं ज्ञानमेव विज्ञानमत्र विवक्षितमिति भावः ॥
3. न तु वाक्यार्थज्ञानादूर्ध्वं साधनान्तरं कृत्वेत्यर्थः । १-१-६, भा. भा. १३.
4. 'न भवते' इत्यपपाठः । वाक्यार्थज्ञानमात्रेण विजानन् इति हि संबन्धः । विजानन् विद्वानतिवादी भवतीति च ॥
5. नेत्येतत् भवते इत्यनेन सम्बन्धनीयमिति भावः ॥
6. 'सोऽतिवादी न भवति' इति वा ॥
7. छां. ७-२४-१.
8. छान्दोग्ये (छां. ७-१६-१) यः सत्येन वदति स नामादिप्राणान्तं मिथ्याभूतमतीत्य परमार्थसत्यं वदतीत्यतिवादीति 'एष तु वा अतिवदति' इत्युक्तम् ॥ इह तु अक्षरं विद्वान् न किञ्चिदप्यतीत्य वदति, तद्व्यतिरेकेण कस्यचिदप्यभावात्परमार्थतः इत्यभिप्रायेण भवते नातिवादीत्युच्यते । एवं च अक्षरमेव परमार्थसत्यमित्यत्रैव वाक्यद्वयस्यापि तात्पर्यमित्येकवाक्यता बोध्या ॥
9. 'आत्मन्येव च' इति (आ॥) पाठे चोऽधिकः ॥

प्रीतिः यस्य सः आत्मरतिः । क्रीडा बाह्यसाधनसापेक्षा, रतिस्तु साधन-निरपेक्षा बाह्यविषयप्रीतिमात्रम् इति विशेषः[1] । तथा क्रियावान् ज्ञान-ध्यानवैराग्यादिक्रिया यस्य सोऽयं क्रियावान् । समासपाठे आत्मरतिरेव क्रिया अस्य विद्यते इति बहुव्रीहिमतुबर्थयोः अन्यतरोऽतिरिच्यते[2] ॥

## नात्र ज्ञानकर्मसमुच्चयोऽभिप्रेतः –

६८. केचित्तु अग्निहोत्रादिकर्मब्रह्मविद्ययोः समुच्चयार्थम् इच्छन्ति । तच्च 'एष ब्रह्मविदां वरिष्ठः इत्यनेन[3] मुख्यार्थवचनेन विरुध्यते । न हि बाह्यक्रियावान् आत्मक्रीड आत्मरतिश्च भवितुं शक्तः कश्चित्[4] । बाह्यक्रियाविनिवृत्तो हि आत्मक्रीडो भवति । बाह्यक्रियात्म-क्रीडयोर्विरोधात् । न हि तमःप्रकाशयोर्युगपदेकत्र[5] स्थितिः संभवति । तस्मात् असत्प्रलपितमेवैतत् अनेन ज्ञानकर्मसमुच्चयप्रतिपादनम् । 'अन्या

---

1. छान्दोग्यभाष्ये तु (७-२५-२) देहमात्रसाधना रतिः, बाह्यसाधना क्रीडा इत्युक्तम् ॥

2. 'आत्मरतिक्रियः' इति बहुव्रीहिणैवार्थलाभे सति आत्मरतिक्रियावान् इति प्रयोगे मतुबतिरिच्यते इत्यभिप्रायः । समासपाठे त्वन्यतरो मतुबतिरिच्यते विशिष्यते बाह्यक्रियानिवृत्तिलाभात् इति तु व्याख्यानकौशलप्रदर्शनमात्रम् । द्रष्टव्यं 'अनादिमत्परं ब्रह्म' (गी. १३-१२) इत्यस्य भाष्यम् ॥

3. 'ब्रह्मविदां वरिष्ठः' इति मुख्यविद् एवाकर्तृत्वबुद्धिस्वपरामर्शिनेत्यर्थः । न त्विहाधुनिकसम्मतं ब्रह्मविद्, ब्रह्मविद्वरः, ब्रह्मविद्वरिष्ठः इति च ज्ञानितारतम्यं ज्ञानभूमिकातारतम्यानुरोधेन शङ्क्यम् ॥

4. पूर्वपश्चिमगतिवत्परस्परविरोधात्तयोः ॥ गी. भा. १८-५५, छां. भा. अव. २-२३-१ – इत्यादिस्थलेषु प्रस्थानत्रयेऽपि भाष्ये ज्ञानकर्मविरोधः प्रदर्शितः ॥ अत्र 'कश्चित्' इत्यनन्तरं 'कश्चित्' इत्यधिकं वा ॥

5. एकस्मिन्नेव स्थले एकस्मिन्नेव काले न सहस्थितिः । एवं एक-स्मिन्नेव पुरुषे एकस्यामेवावस्थायां ज्ञानकर्मणोर्न सहसम्बन्ध इत्यर्थः । ऐ. भा. अव., तै. भा. शीक्षा उपसंहारभाष्यम्, गी. भा. ५-अव., ई. भा. २.

वाचो विमुञ्चथ[1]'' (२-२-५), 'संन्यासयोगात्[2]'' (३-२-६) इत्यादिश्रुतिभ्यश्च। तस्मात् अयमेवेह क्रियावान् यो ज्ञानध्यानादिक्रियावान्[3] अभिन्नार्थमर्यादः[4] संन्यासी। य एवंलक्षणो नातिवादी आत्मक्रीडः आत्मरतिः क्रियावान् ब्रह्मनिष्ठः[5] स ब्रह्मविदां सर्वेषां वरिष्ठः[6] प्रधानः ॥ ४ ॥

## आत्मदर्शनसाधनानि

**सत्येन लभ्यस्तपसा ह्येष आत्मा**
**सम्यग्ज्ञानेन ब्रह्मचर्येण नित्यम्।**
**अन्तःशरीरे ज्योतिर्मयो हि शुभ्रो**
**यं पश्यन्ति यतयः क्षीणदोषाः ॥ ५ ॥**

1. अपरविद्यात्वात्त्यागोपदेशेन वेदतदुक्तकर्मत्यागोऽवगम्यत इति भावः ॥

2. प्रत्यक्षमेवात्र कर्मत्यागो विहितः ॥

3. ज्ञानध्यानादीनामपि मानसक्रियात्वात् विशिष्टक्रियोपदेशः 'क्रियावान्' इति ॥

4. 'असंभिन्नार्यमर्यादः' इति वा ॥ अनुष्ठेयार्थमर्यादामभिन्दन् इत्यर्थः देहात्माभिमानिनां हि स्वेच्छाचारः। स चाभिमानो नास्ति ब्रह्मज्ञानिन इति ॥ सू. भा. २-३-४८.

5. ईदृश एव च गुरुर्विद्याधिगमाय अभिगन्तव्य इत्युक्तं भाष्ये प्राक्. (१-१-१२.)

6. ज्ञानकर्मसमुच्चयानुष्ठावतां ब्रह्मविदामपेक्षया अयमक्षरब्रह्मनिष्ठो वरिष्ठ इत्युच्यते। न तु ब्रह्मज्ञानिष्वपि ब्रह्मविद्वरब्रह्मविद्वरिष्ठेत्यादितारतम्यमत्र विज्ञायते। न हि ब्रह्मविद्यायामुत्कर्षापकर्षान्नकोऽतिशय उपपद्यते ॥ सू. भा. ३-४-५२.

सत्यतपःसम्यग्ज्ञानब्रह्मचर्याणि –

६९. अधुना सत्यादीनि भिक्षोः[1] सम्यग्ज्ञानसहकारीणि[2] साधनानि विधीयन्ते निवृत्तिप्रधानानि ॥

सत्येन अनृतत्यागेन[3] मृषावचनत्यागेन लभ्यः प्राप्तव्यः । किंच तपसा हि इन्द्रियमनएकाग्रतया । 'मनसश्चेन्द्रियाणां च ह्यैकाग्र्यं परमं तपः' (मो. ध. २५०-४) इति स्मरणात्[4] । तद् हि अनुकूलम् आत्मदर्शनाभिमुखीभावात् परमं साधनं तपः[5] । नेतरत् चान्द्रायणादि[6] । 'एष आत्मा लभ्यः' इत्यनुषङ्गः सर्वत्र । सम्यग्ज्ञानेन यथाभूतात्म-दर्शनेन[7] ब्रह्मचर्येण मैथुनासमाचारेण[8] । नित्यं सर्वदा । नित्यं सत्येन

1. भिक्षूणामेव हि निवृत्तिधर्मपराणां संपन्नसाधनवत्ता । न चासम्पन्नं साधनं फलसाधनायालमिति भावः ॥ ऐ भा. अव । तै. भा. शीक्षा. उपसं; गी. भा. ६ अव.

2. अत्रापरिपक्वज्ञानमेव वाक्यार्थज्ञानं सम्यग्ज्ञानशब्दवाच्यं तत्सहकारित्वं सत्यादीनामिति केचित् । तदसत् । वाक्यार्थमात्रेण विजानन् (३-१-४, भा.भा. ६४) इति भाष्यविरोधात् । परविद्योत्पत्तिसाधनत्वेनैव तु सहकारित्ववाचोयुक्तिरित्युक्तं प्राक् (भा. भा. ६० तत्सहकारीणीत्यस्य टिप्पणे) अस्माभिः ॥

3. 'न ब्रूयात्सत्यमप्रियम्' इति स्मृतेः सत्यं ब्रूयादेवेत्यर्थं न गृह्णीयादित्याशयेन अनृतत्यागेनेति व्याख्यानम् । न तु त्यागमात्रं सत्यवदनमित्यभिप्रायेण ॥ 4. 'तज्ज्यायः सर्वधर्मेभ्यः स धर्मः पर उच्यते' इत्युत्तरार्धम् ॥ तै. भा. ३-१.

5. एतादृशं तप एव हि ब्रह्मनिष्ठत्वोपबृंहकत्वेन परिव्राजकानां विधीयते ॥ सू. भा. ३-४-२०, ध्यानयोगाङ्गत्वेन गीतासु शमशब्दोपलक्षितं च ॥ गी. भा. ६-३. 6. तस्य कायक्लेशप्रधानस्य वैखानसाश्रमे विहितत्वात् । चित्तायासमापाद्य बहिःप्रवणत्वकरणाच्च ॥

7. यथाभूतार्थदर्शनप्रयत्नेनेत्यर्थः । सम्यग्ज्ञानसंपादनार्थं प्रयत्नविशेषोऽत्र सम्यग्ज्ञानशब्दवाच्यः । सम्यग्ज्ञानमेव हि साक्षादात्मलाभकारणम् । अतस्तदर्थविचारादिप्रयत्नोऽत्र सम्यग्ज्ञानं ग्रहीतव्यम् । एतदेव 'अध्यात्मज्ञान-नित्यत्वम्' इत्युक्तम् (गी. १३-११) गीता ॥

8. स्मरणं कीर्तनं केलिः प्रेक्षणं गुह्यभाषणम्, सङ्कल्पोऽध्यवसायश्च क्रियानिर्वृतिरेव च (?) इत्युक्ताष्टाङ्गमैथुनपरित्यागेन ॥

नित्यं तपसा, नित्यं सम्यग्ज्ञानेन — इति सर्वत्र नित्यशब्दः अन्तर्दीपिकान्यायेन[1] अनुषक्तव्यः । वक्ष्यति च 'न येषु जिह्ममनृतं न माया च' (प्र. १–१६)[2] इति । क्वासौ[3] आत्मा य एतैः साधनैर्लभ्यः इति ? उच्यते । अन्तः शरीरे अन्तः मध्ये शरीरस्य पुण्डरीकाकाशे[4] ज्योतिर्मयो हि रुक्मवर्णः[5] शुभ्रः शुद्धः यम् आत्मानं पश्यन्ति उपलभन्ते यतयः यतनशीलाः संन्यासिनः[6] क्षीणदोषाः क्षीणक्रोधादिचित्तमलाः । स आत्मा नित्यं सत्यादिसाधनैः । संन्यासिभिः लभ्यते इत्यर्थः । न कादाचित्कैः सत्यादिभिर्लभ्यते[7] ॥ ५ ॥

# सत्यमेव जयते नानृतं
# सत्येन पन्थाः विततो देवयानः ।

1. मध्यदीपिकान्यायः, देहलीदीपन्यायापराभिधानः । यथा हि सा दीपिका बाह्यमभ्यन्तरं चेत्युभयं प्रकाशयति, एवं नित्यशब्दोऽत्र सर्वत्र सत्यादिविशेषणतया अनुषक्तव्य इत्यभिप्रायः । सत्यादीनां भावनापरिपाकनिमित्तं ह्यात्मज्ञानम् स एव ह्यात्मलाभः ॥ गी. भा. १३–११.

2. तेन जिह्माद्यसंकीर्णसत्यादिनिष्ठत्वमत्रोपदिष्टमिति गम्यत इति भावः । मन्त्रब्राह्मणयोरेकार्थता हि युक्तेति । यद्यपि प्रश्नोपनिषदि कर्मज्ञानसमुच्चयानुष्ठायिनां जिह्माद्यभावस्वरूपं साधनमुपदिष्टम्, तथापि सम्यग्ज्ञानसाधनानुष्ठाने तस्कैमुतिकन्यायेनापेक्षितव्यम् इतिभावेनात्र तदुदाहरणम् । एकमेव ह्युपास्यं ज्ञेयं च ब्रह्मेति ॥

3. 'कोऽसौ' इत्येतदपेक्षया अयमेव ज्यायान् पाठः । द्रष्टव्यं प्र. (६–१, २) भाष्यम् ॥

4. 'अन्तःशरीरे' इति सामान्येनोक्तमपि हृदये इति विशेषपरत्वेन योज्यम् २–२–६, ७, ८, ९ – इत्यादिना एकवाक्यतायै इति भावः ॥

5. ३–१–५ मन्त्रस्य परामर्शोऽयम् ॥

6. यद्यपि गृहस्थेष्वपि सत्यादिसाधनानि सन्ति, तथापि नित्यसत्यादीनि तु संन्यासिनामेव शक्यानुष्ठानानीति भावः ॥

7. एतानि सिद्धानां ज्ञानिनां लक्षणानि, साधकानां तु यत्नसाध्यानि ज्ञानसाधनानि । गी. भा. अवतरणिका २–५५, गी. भा. अवतरणिका १३–७, छां. भा. ८–१–१ (संबन्धभाष्यम्).

**येनाक्रमन्त्यृषयो ह्याप्तकामा**
**यत्र तत्सत्यस्य परमं निधानम् ॥ ६ ॥**

**साधनस्तुतिः –**

७०. सत्यादि[1]साधनस्तुत्यर्थोऽयम् अर्थवादः[2] ॥

सत्यमेव सत्यवानेव जयते जयति[3] नानृतं नानृतवादी इत्यर्थः । न हि सत्यानृतयोः केवलयोः पुरुषानाश्रितयोः जयः पराजयो वा संभवति । प्रसिद्धं लोके सत्यवादिना अनृतवादी अभिभूयते न विपर्ययः[4] । अतः सिद्धं सत्यस्य बलवत्साधनत्वम् । किञ्च, शास्त्रतोऽपि अवगम्यते सत्यस्य साधनातिशयत्वम् । कथम् ? सत्येन यथाभूतवादव्यवस्थया पन्थाः देवयानाख्यः विततः विस्तीर्णः । सातत्येन प्रवृत्तः । येन पथा हि आक्रमन्ति आक्रमन्ते[5] ऋषयः दर्शनवन्तः[6] कुहकमायाशाठ्याहङ्कार-दम्भानृतवर्जिताः[7] हि आप्तकामाः विगततृष्णाः सर्वतः[8] । यत्र यस्मिन् तत् परमार्थतत्त्वं सत्यस्य उत्तमसाधनस्य सम्बन्धि साध्यं परमं प्रकृष्टं

1. यद्यपि सत्यमात्रं स्तुतमुपलभ्यते मन्त्रे, तथाप्युक्ततपआदिसर्व-साधनस्तुत्युपलक्षणत्वेन ग्रहीतव्या स्तुतिरियमिति भावः ॥

2. तस्यावश्यानुष्ठेयत्वज्ञापनार्था इति शेषः ॥

3. उपनिषदि भाष्ये च 'जयति' इत्येव आ॥

4. सत्यवादिन्येव श्रद्धातिशयो लोकस्य दृश्यते, नानृतवादिनि ॥

5. 'क्रमन्ते' इत्युपसर्गरहितपाठः आ॥

6. उपासनया साक्षात्कारं प्राप्ताः ॥

7. कुहकं वञ्चनम् । माया मनोवाक्कर्मसु अनृजुत्वम् । शाठ्यं लोभः । अहङ्कारः मिथ्याभिमानः । दम्भो धर्मध्वजित्वम् । अनृतम् अयथाभूतभाषणम् । एतैर्दोषैर्वर्जिताः शुद्धसात्त्विका इत्यर्थः ॥

8. ऐहिकभोगतृष्णावर्जिताः ॥

निधानं पुरुषार्थरूपेण निधीयते इति निधानं[1] वर्तते । तत्र च येन पथा आक्रमन्ति स सत्येन विततः इति पूर्वेण संबन्धः[2] ॥ ६ ॥

**बृहच्च तद्दिव्यमचिन्त्यरूपं**
**सूक्ष्माच्च तत्सूक्ष्मतरं विभाति ।**
**दूरात् सुदूरे तदिहान्तिके च**
**पश्यत्स्विहैव निहितं गुहायाम् ॥ ७ ॥**

हृत्स्थब्रह्मस्वरूपम् –

७१. किं तत्, किंधर्मकं च तत्[3] इति ? उच्यते – बृहत् महत् च तत् प्रकृतं ब्रह्म सत्यादिसाधनम्[4] । सर्वतोव्याप्तत्वात्[5] । दिव्यं स्वयंप्रभम् अनिन्द्रियगोचरम् । अत एव न चिन्तयितुं शक्यते अस्य रूपम् इति अचिन्त्यरूपम्[6] । सूक्ष्मात् आकाशादेरपि तत् सूक्ष्मतरम् । निरतिशयं हि सौक्ष्म्यम् अस्य । सर्वकारणत्वात्[7] । विभाति विविधम्

1. न्यासवत् भोग्यत्वाय स्थितम् इत्यर्थः ॥

2. सत्याख्यं ब्रह्मलोकं येनाक्रमन्ति स देवयानाख्यः पन्थाः सत्येन विततः, नानृतेनेति शास्त्रप्रसिद्धिः । यत इत्थंमहाभागं सत्यम्, अतस्तेनैव सत्येन लभ्योऽयं परमात्मेत्यभिप्रायः ॥

3. ननु सत्यस्य निधानं किंधर्मकं किंस्वभावकम् इति पृच्छायामेतदुच्यते । प्रकृताक्षरस्वरूपकमेव तदित्युच्यते । सत्यादिसाधनानां सम्यग्ज्ञानसाधनत्वं द्रढयितुम् ॥ परापरब्रह्मणोरैकत्वं द्रष्टव्यं सू. भा. ४-३-९, ४-३-१४ भाष्ययोः ॥

4. प्रकृतमक्षरं ब्रह्मैव बृहदित्युच्यते, तदेव च सत्यनिधानस्य परमार्थस्वरूपमित्यर्थः ॥

5. व्याप्तत्वात् बृहत् ॥

6. मनसोऽप्यगोचरम् ॥ तै. भा. २-९, मां. भा. ७.

7. का. भा. १-३-१५.

आदित्यचन्द्राद्याकारेण भाति दीप्यते । किञ्च दूरात् विप्रकृष्टदेशात् सुदूरे विप्रकृष्टतरे देशे वर्तते । अविदुषाम्, अत्यन्तागम्यत्वात्[1] तद् ब्रह्म । इह देहे अन्तिके समीपे च विदुषाम्, आत्मत्वात् । सर्वान्तरत्वाच्च, आकाशस्याप्यन्तरश्रुतेः[2] । इह[3] पश्यत्सु चेतनावत्सु इत्येतत् । निहितं स्थितं दर्शनादिक्रियावत्त्वेन[4] योगिभिः[5] लक्ष्यमाणम् । क्व ? गुहायां बुद्धिलक्षणायाम् । तत्र हि निगूढं[6] लक्ष्यते विद्वद्भिः । तथापि अविद्यया संवृतं[7] सत् न लक्ष्यते तत्रस्थमेव अविद्वद्भिः ॥ ७ ॥

**न चक्षुषा गृह्यते नापि वाचा**
**नान्यैर्देवैस्तपसा कर्मणा वा ।**
**ज्ञानप्रसादेन विशुद्धसत्त्व-**
**स्ततस्तु तं पश्यते निष्कलं ध्यायमानः ॥ ८ ॥**

---

1. ते हि बाह्यप्रत्ययानुसारिण इति । आत्मप्रत्ययानुसारिणां तु अत्यन्तमन्तिके ॥ ई. भा. ५, गी. भा. १३-१५.

2. बृ. ३-७-१२ । यद्धि सर्वान्तरम्, तदत्यन्तमेव समीपे वर्तते ॥

3. 'इहैव' इति मूलम् । तदनुलक्ष्य एवकारो लेखकप्रमादात्त्रुटित इत्यवगम्यते ॥

4. दर्शनादिक्रियावत्त्वेन यदुपलभ्यते तत्साक्षित्वेनेत्यर्थः ॥

5. समाहितचित्तैर्निदिध्यासनशीलैः ॥ गी भा. १५-१०.

6. 'गूढमस्यां ब्रह्म साक्षिरूपेणेति गुहा' इति व्युत्पत्तिः सूचिताऽत्र । २-२-१, २-२-६, २-२-७ – इत्यादिस्थलेषु पुनःपुनरेतत्प्रतिपादितम् अस्यामुपनिषदि । अत एव गूढावस्यां भोगापवर्गौ (भोगोऽविदुषाम्, अपवर्गश्च-विदुषाम्) इति व्युत्पत्तिः श्रुत्यन्तरभाष्ये ॥ तै भा. २-१.

7. अविद्यया संवृतमिति । अन्तःकरणधर्मानात्मन्यध्यस्य ये तिष्ठन्त्यविद्वांसः तेषां संवृतमिव । अविद्याया अपि हि प्रकाशकं ब्रह्म । द्रष्टव्यं बृ. भा. ४-४-६ मुग्धोऽस्मीत्यस्य भाष्यम् ॥

## विशुद्धान्तःकरणेन ध्यानमसाधारणं साधनम् –

७२. पुनरपि[1] असाधारणं तदुपलब्धिसाधनम् उच्यते । यस्मात्- न चक्षुषा गृह्यते केनचिदपि । अरूपत्वात् । नापि गृह्यते वाचा । अनभिधेयत्वात् । न च अन्यैः देवैः इतरेन्द्रियैः[2] । तपसः सर्वसाधन-त्वेऽपि न तपसा गृह्यते । तथा वैदिकेन अग्निहोत्रादिकर्मणा प्रसिद्ध-महत्त्वेनापि न गृह्यते । किं पुनस्तस्य ग्रहणे साधनम् इति ? आह । ज्ञानप्रसादेन **आत्मावबोधनसमर्थमपि स्वभावेन सर्वप्राणिनां ज्ञानं**[3] **बाह्यविषयरागदोषकलुषितम् अप्रसन्नम् अशुद्धं सत् नावबोधयति नित्यं सन्निहितमपि आत्मतत्त्वं मलावनद्धमिव आदर्शम् विलुलितमिव सलिलम्**[4] । तद् यदा इन्द्रियविषयसंसर्गजनितरागादि-मलकालुष्यापनयनात्[5] आदर्शसलिलादिवत् प्रसादितं स्वच्छं शान्तम् अवतिष्ठते, तदा ज्ञानस्य प्रसादः स्यात् । तेन ज्ञानप्रसादेन विशुद्धसत्त्वः[6] विशुद्धान्तःकरणः योग्यो ब्रह्म द्रष्टुं यस्मात्, ततः तस्मात् तु तमात्मानं पश्यते पश्यति उपलभते निष्कलं सर्वावयवभेदवर्जितं ध्यायमानः

1. ओङ्काराश्रयणेनोक्तपूर्वमपि ॥

2. मनोवागादीनामपि साक्षित्वात्, स्वयंज्योतिष आत्मनो दीप्त्यैव तेषां स्वस्वविषयेषु प्रवृत्तेः, स्वात्मनि क्रियाविरोधाच्च ॥ के. भा. ८-३.

3. ज्ञानमत्र बुद्धिर्ज्ञानवृत्तिमती । यद्यप्यात्मज्ञाने यत्नोऽनावश्यक एव, अत्यन्तप्रसिद्धत्वादात्मनः ; तथाप्यविद्याध्यारोपितानात्मसम्बन्धो निराकरणीयः । रागादिश्चानात्मसम्बन्धकृत इति तेन कलुषितया बुद्ध्या आत्मा न ज्ञायत इत्युच्यते गी. भा. १८-५०.

4. दृष्टान्तद्वयेन क्रमेण मलविक्षेपौ परामृष्टौ वेदितव्यौ ॥

5. सत्यादिसाधनानुष्ठानं च प्रसादार्थमेव । शास्त्राचार्योपदेशोऽपि एतदर्थं एव ॥ गी. भा. २-२१.

6. ज्ञानप्रसादो रागाद्यपनयनेन स्वच्छताप्राप्तिः । तेन द्वारेण विशुद्ध-सत्त्वः । विशुद्धमेव सत् स्वभावतः सत्त्वं रागादिना कलुषितं भवति । तदपनयनेन तु स्वरूपेणावतिष्ठते इत्यभिप्रायः ॥

सत्यादिसाधनवान् उपसंहृतकरणः एकाग्रेण मनसा ध्यायमानः[1] चिन्तयन् ॥ ८ ॥

**एषोऽणुरात्मा चेतसा वेदितव्यो**
**यस्मिन्प्राणः पञ्चधा संविवेश ।**
**प्राणैश्चित्तं सर्वमोतं प्रजानां**
**यस्मिन् विशुद्धे विभवत्येष आत्मा ॥ ९ ॥**

७३. यम् आत्मानम् एवं पश्यति एषः अणुः सूक्ष्मः[2] आत्मा[3] चेतसा विशुद्धज्ञानेन[4] केवलेन वेदितव्यः । क्वासौ ? यस्मिन् शरीरे प्राणः वायुः पञ्चधा प्राणापानादिभेदेन संविवेश सम्यक् प्रविष्टः[5] । तस्मिन्नेव शरीरे हृदये चेतसा ज्ञेय इत्यर्थः । कीदृशेन चेतसा वेदितव्य इति ? आह । प्राणैः सहेन्द्रियैः[6] चित्तं सर्वम् अन्तःकरणं प्रजानाम् ओतं व्याप्तम् येन । क्षीरमिव स्नेहेन, काष्ठमिवाग्निना । सर्वं हि प्रजानाम् अन्तःकरणं चेतनावत् प्रसिद्धं लोके[7] । यस्मिंश्च चित्ते क्लेशादिमलवियुक्ते

---

1. ध्यानमत्र आत्मस्वरूपचिन्तनं तत्रैवैकाग्रीकरणं च । अयमेव गीतासु ध्यानयोगशब्देन व्यपदिष्टो निदिध्यासनापराभिख्यः । 'ध्यायमानो ज्ञानप्रसादं लभते, ज्ञानप्रसादेनाऽऽत्मानं पश्यतीति क्रमो द्रष्टव्यः' – इति केचित् । तन्न । ज्ञानप्रसादेन विशुद्धसत्त्वस्य ध्यानेन दर्शनं भवतीतिश्रुतिविरोधात्, भाष्यविरोधाच्च । न च ध्यानमत्र भावनारूपा क्रिया । प्रसिद्धं च ध्यानयोगस्य दर्शनपर्यवसायित्वम् ॥ गी॰ भा॰ ६-२९, १८-५२, ५३ ; सू॰ भा॰ ४-१-१२.

2. करणागोचर इत्यर्थः ॥

3. त्रुटितोऽयं शब्दः आ॥

4. समनन्तरपूर्वमन्त्रोक्तविधया विशुद्धान्तःकरणेनेत्यर्थः ॥

5. अयं च प्राणस्य शरीरे प्रतिष्ठाक्रमस्तृतीयप्रश्ने वितत्य दर्शितः ॥

6. इन्द्रियैः सहेति भिन्नक्रमः सहशब्दः । प्राणैरित्यस्य व्याख्यानमेतत् ॥

7. आत्मचैतन्यव्याप्तमेव ह्यन्तःकरणमिति तदाभासत्वमेव तत्रात्मभ्रान्तिकारणम् ॥ गी॰ भा॰ १८-५०.

शुद्धं विभवति एष उक्तः आत्मा । विशेषेण स्वेन आत्मना विभवति[1] । आत्मानं प्रकाशयति इत्यर्थः[2] ॥ ९ ॥

## ज्ञानिनः सर्वकामावाप्तिः

**यं यं लोकं मनसा संविभाति**
**विशुद्धसत्त्वः कामयते यांश्च कामान् ।**
**तं तं लोकं जयते तांश्च कामां-**
**स्तस्मादात्मज्ञं ह्यर्चयेद्भूतिकामः ॥ १० ॥**

### ज्ञानिशुश्रूषा विभूतिप्रदा सकामानाम् –

७४. य एवम् उक्तलक्षणं सर्वात्मानम् आत्मत्वेन प्रतिपन्नः, तस्य सर्वात्मत्वादेव सर्वावाप्तिलक्षणं[3] फलम् आह –

यं यं पित्रादिलक्षणं[4] मनसा संविभवति संकल्पयति मह्यम् अन्यस्मै वा[5] भवेत् इति विशुद्धसत्त्वः क्षीणक्लेशः आत्मवित् निर्मलान्तः-

1. अस्मात्प्राक् भवतीत्येकः शब्दः प्रमादान्न लिखित इत्यनुमीयते । विभवतीत्यस्य विशेषेण भवतीत्यवयवार्थदर्शनपरत्वाद्भाष्यस्य ॥

2. विशुद्धान्तःकरणानां भक्तानां चित्ते स्वयमेवाविर्भवत्यात्मा इत्यभिप्रायः । एतेन पश्यन्ते ध्यायमानः इति चित्तविषयीभावो न विवक्षित इत्युक्तं भवति ॥ गी. भा. १०-११.

3. ज्ञानिनो यत्फलं सर्वाप्तिलक्षणं न तत्कर्मोपासनाफलवत्कालान्तरभावि, किं तु ज्ञानसमकालभावि । यच्च योग्यादिषु दृश्यमानसिद्धिरूपम्, तदपि तस्यैव सर्वात्मत्वात् ॥ बृ. भा. तृतीयाध्यायान्ते आनन्दमीमांसाभाष्यम् ॥

4. यद्यपि छान्दोग्ये (८-२-१ प्रभृतिपर्यन्तम्) श्रूयमाणा लोका सगुणब्रह्मोपासकानाम्, तथापि ज्ञानिनः सर्वात्मत्वात्तेऽपि लोकास्तस्यैवेत्यभिप्रायेणात्र परामृश्यन्ते विभूतिप्रदर्शनार्थमिति ज्ञेयम् ॥

5. आत्मार्थं लोककल्पनमसंभावितमित्याशङ्क्य अन्यस्मै वा इत्युक्तम् ॥

करणः कामयते यांश्च कामान् प्रार्थयते भोगान् तं तं लोकं जयते प्राप्नोति तांश्च कामान् संकल्पितान् भोगान्। तस्माद् विदुषः सत्यसंकल्पत्वात् आत्मज्ञम् आत्मज्ञानेन विशुद्धान्तःकरणम्[1] हि अर्चयेत् पूजयेत् पाद-प्रक्षालनशुश्रूषानमस्कारादिभिः भूतिकामः विभूतिम् इच्छुः ॥ १० ॥

इत्याथर्वणमुण्डकोपनिषद्भाष्ये तृतीयमुण्डके प्रथमः खण्डः

1. आत्मज्ञानं ह्यत्यन्तं शुद्धिकरमन्तःकरणस्य ॥ गी. भा. ४-३८.

# तृतीयमुण्डके द्वितीयः खण्डः

## आत्मज्ञशुश्रूषूणां निष्कामानां मोक्षः

स वेदैतत् परमं ब्रह्म धाम
यत्र विश्वं निहितं भाति शुभ्रम् ।
उपासते पुरुषं ये ह्यकामा-
स्ते शुक्रमेतदतिवर्तन्ति धीराः ॥ १ ॥

### निष्कामानां शुश्रूषूणां मोक्षप्राप्तिः

७५. ततः पूजार्ह एवासौ[1] । यस्मात्[2] – स वेद जानाति एतत् यथोक्तलक्षणं ब्रह्म परमं धाम उत्कृष्टं[3] सर्वकामानामाश्रयम् आस्पदम्[4] । यत्र यस्मिन् ब्रह्मणि धाम्नि विश्वं समस्तं जगत् निहितम् अर्पितम्[5] । यच्च स्वेन ज्योतिषा[6] भाति शुभ्रं शुद्धम् । तमपि[7] एवमात्मज्ञं पुरुषं ये हि अकामाः विभूतितृष्णावर्जिताः[8] मुमुक्षवः सन्तः

1. मुद्रितपुस्तकेषु एतद्वाक्यमतीतानन्तरमन्त्रभाष्यसमाप्तौ स्थापितम् ॥
2. तस्य शुश्रूषणं भक्तानामभीष्टप्रदमित्यत्र हेतुमाह – यस्मादिति ॥
3. 'प्रकृष्टम्' इति वा॥
4. ब्रह्मण्येव हि सर्वाः कामा विकल्पिता इति ब्रह्मज्ञानेन तत्प्राप्तिमान् सर्वान्कामान् सहैवाप्नोति ॥ तै. भा. २-१ 'सर्वान् कामान् सह' इत्यस्य विवरणं द्रष्टव्यम् ॥
5. अर्पितम् । अरा इव रथनाभौ इति शेषः । यदाश्रित्यैव आत्मनः स्वरूपस्थित्यात्मिकं लभते इत्यर्थः ॥
6. चैतन्यप्रकाशेन ॥ २-२-१०.
7. अपिशब्दात् यथा परमेश्वरम् इति लभ्यते ॥
8. 'भूतिकामोऽर्चयेत्' इत्यनन्तरमन्त्रोक्तं विभूतिफलकमर्चनम् । अकामानां तु सेवा मुक्तिफलदैवेत्यभिप्रायः । तस्मात्तेषामपि पूजार्ह एवासौ इत्युक्तम् ॥

उपासते परमिव देवं[1] ते शुक्रं नृबीजं यदेतत् प्रसिद्धं शरीरोपादान-कारणम् अतिवर्तन्ति अतिगच्छन्ति धीराः धीमन्तः । न पुनर्योनिं प्रसर्पन्ति[2] । 'न पुनः क्वचिद्रतिं करोति' (?) इति श्रुतेः । अतस्तं पूजयेत् इत्यभिप्रायः ॥ १ ॥

आत्मज्ञः पर्याप्तकामः

**कामान् यः कामयते मन्यमानः**
**स कामभिर्जायते तत्र तत्र ।**
**पर्याप्तकामस्य कृतात्मनस्तु**
**इहैव सर्वे प्रविलीयन्ति कामाः ॥ २ ॥**

**कामत्यागस्य प्राधान्यम्**

७६. मुमुक्षोः कामत्याग एव प्रधानं साधनम् इत्येतद् दर्शयति –

कामान् यः दृष्टादृष्टेष्टविषयान् कामयते मन्यमानः तद्गुणान् चिन्तयानः प्रार्थयते स तैः कामभिः कामैः धर्माधर्मप्रवृत्तिहेतुभिः विषयेच्छा-रूपैः सह जायते तत्र तत्र । यत्र यत्र विषयप्राप्तिनिमित्तं कामाः कर्मसु पुरुषं नियोजयन्ति तत्र तत्र तेषु तेषु विषयेषु तैरेव[3] कामैर्वेष्टितो जायते । यस्तु परमार्थतत्त्वविज्ञानात् पर्याप्तकामः । आत्मकामत्वेन[4] परि समन्ततः आप्ताः कामाः यस्य । तस्य पर्याप्तकामस्य कृतात्मनः अविद्यालक्षणात् अपररूपात् अपनीय स्वेन परेण रूपेण कृतः आत्मा विद्यया तस्य

1. 'परमिव सेवन्ते' इति आ॥ तत्रापि देवं सेवन्ते इति देवशब्दो लुप्तो द्रष्टव्यः। सेवन्ते इति 'उपासते' इत्यस्य व्याख्यानमिति च । तत्र ते इत्यप्य-ध्याहार्यम्, 'परमिव देवम्' इति श्वे· (६-२६) परामर्शः ॥

2. पुनर्जन्मकारणस्याज्ञानस्य अत्यन्तमुपमृदितत्वादिति भावः ॥

3. 'तैरिव' आ॥ तैरेव कामैः कोशकार इव स्वात्मानं वेष्टयते ततो जायते च इत्यर्थः ॥ 4. आत्मकामो ह्याप्तकामः ॥ बृ· ४-४-६·

कृतात्मनस्तु[1] इहैव तिष्ठत्येव शरीरे[2] सर्वे धर्माधर्मप्रवृत्तिहेतवः प्रविलीयन्ति प्रविलीयन्ते विलयम् उपयान्ति नश्यन्ति इत्यर्थः । कामाः तज्जन्महेतुविनाशात्[3] न जायन्ते इत्यभिप्रायः ॥ २ ॥

आत्मवरणमेव मुख्य आत्मप्राप्त्युपायः

**नायमात्मा प्रवचनेन लभ्यो**
**न मेधया न बहुना श्रुतेन ।**
**यमेवैष वृणुते तेन लभ्य-**
**स्तस्यैष आत्मा विवृणुते तनुं स्वाम् ॥ ३ ॥**

आत्मप्राप्त्यै परमोपायः

७७. यद्येवं सर्वलाभात् परम आत्मलाभः[4], तल्लाभाय प्रवचनादय उपायाः बाहुल्येन कर्तव्याः इति प्राप्ते इदम् उच्यते –

योऽयम् आत्मा व्याख्यातः, यस्य लाभः परः पुरुषार्थः, नासौ वेदशास्त्राध्ययनबाहुल्येन प्रवचनेन लभ्यः । तथा न मेधया ग्रन्थार्थधारणशक्त्या । न बहुना श्रुतेन नापि भूयसा श्रवणेन इत्यर्थः[5] । केन तर्हि लभ्यः इति ? उच्यते । **यमेव परमात्मानमेव एषः विद्वान् वृणुते**

1. आत्मनः कार्यत्वाभावात्, अविद्याकल्पितापररूपापनय एव पररूपकरणमित्यर्थः । साधकपरस्तु कृतात्मशब्दोऽन्यथा व्याख्यातो गीता (१५-११) भाष्ये ॥

2. जीवत एव कामा आत्मनि प्रविलीयन्ते, आत्मतादात्म्यं गच्छन्तीत्यर्थः । न तु संसाराय तं शरीरान्तरं नयन्ति 'ब्रह्मैव सन्ब्रह्माप्येति' (बृ. ४-४-६) इति श्रुत्यन्तरात् ॥

3. अविद्या हि कामजन्महेतुः । विद्यया तन्नाशान्न जायन्त इत्यर्थः ॥

4. 'आत्मलाभान्न परं विद्यते' (आ. ध. १-८-२२-२) इति स्मृतिं सूचयति · परः पुरुषार्थ इति ॥

5. वक्ष्यमाणसाधनरहितैः केवलप्रवचनादिभिर्न लभ्य इत्यर्थः । न तु प्रवचनादिष्वनादरः ॥

प्राप्तुम् इच्छति, तेन वरणेन[1] एष परमात्मा[2] लभ्यः नान्येन साधनान्तरेण । नित्यलब्धस्वभावत्वात् कीदृशोऽसौ विदुष आत्मलाभ इति[3] ? उच्यते । तस्य एष आत्मा अविद्यासञ्छन्नां स्वां परां तनुं[4] स्वात्मतत्त्वं स्वरूपं विवृणुते प्रकाशयति[5] । प्रकाशे इव घटादिः विद्यायां सत्याम् आविर्भवति इत्यर्थः । तस्मात् अन्यत्यागेन आत्म(लाभ)-प्रार्थनैव[6] आत्मलाभसाधनम् इत्यर्थः ॥ ३ ॥

आत्मप्राप्त्यै सहकारिसाधनानि

**नायमात्मा बलहीनेन लभ्यो**
**न च प्रमादात्तपसो वाप्यलिङ्गात् ।**
**एतैरुपायैर्यतते यस्तु विद्वां-**
**स्तस्यैष आत्मा विशते ब्रह्मधाम ॥ ४ ॥**

बलादिसहकारिसाधनानि

७८. आत्मप्रार्थनासहायभूतानि एतानि च साधनानि बल-प्रमादतपांसि लिङ्गयुक्तानि संन्याससहितानि । यस्मात् —

---

1. अन्यत्सर्वं परित्यज्यात्मानमेव यत्कामयते तेन लभ्य इत्यर्थः । साधनं वक्तुं प्रवृत्तत्वात् तेनेति वरणपरतया व्याख्यातम् । यमेव वृणुते तेनैवात्मना वरित्रा लभ्य इति यत्तदोः समानार्थत्वमपि प्रदर्शितं काठक(१-२-२३)भाष्ये । उभयथापि परमात्मनः स्वात्मत्वेनानुसंधानमेव विवक्षितम् ॥

2. 'पर आत्मा' वा ॥

3. ननु परमात्मा नित्यं स्वात्मभावेनैव स्थितः । तत्पुनः कीदृशोऽसौ तल्लाभ ? – इत्याक्षेपः ॥

4. 'तनूम्' इति वा॥, काठके च ॥

5. प्रागविद्यामात्रव्यवहितस्य परमात्मस्वरूपस्य अविद्यामोहान्धकार-नाशनमेव प्रकाशनम्, स एव चास्य लाभ इत्यभिप्रायः । गी.भा. १०-११, १८-६६.

6. 'आत्मप्रार्थनैव' इत्येवालम्, लाभशब्दस्य त्वधिकावापः केनचिदित्यनुमीयते । उत्तरमन्त्रभाष्ये 'आत्मप्रार्थना' इत्येव पाठात्, 'यमेव वृणुते तेन वरणेन' इत्यनेन वाक्येनैकार्थ्याय च ॥

अयमात्मा बलहीनेन बलप्रहीणेन आत्मनिष्ठाजनितवीर्यहीनेन[1] न लभ्यः[2] इत्यर्थः । नापि लौकिकपुत्रपश्वादिविषयासङ्गनिमित्तात् प्रमादात्[3]। तथा तपसो वाऽपि अलिङ्गात् लिङ्गरहितात् । तपोऽत्र ज्ञानम्[4]। लिङ्गं संन्यासः । संन्यासरहितात् ज्ञानात् न लभ्यते इत्यर्थः[5] । एतैः उपायैः बलप्रमादसंन्यासज्ञानैः यतते तत्परः सन् प्रयतते यस्तु विद्वान् विवेकी आत्मवित्[6] तस्य विदुषः एष आत्मा विशते संप्रविशति ब्रह्मधाम[7] ॥ ४ ॥

## ज्ञानिनो ब्रह्मभावः

संप्राप्यैनमृषयो ज्ञानतृप्ताः
　कृतात्मानो वीतरागाः प्रशान्ताः ।
ते सर्वगं सर्वतः प्राप्य धीरा
　युक्तात्मानः सर्वमेवाविशन्ति　　॥ ५ ॥

1. आत्मविद्याकृतं वीर्यमात्मनैव हि लभ्यते । अतोऽत्रात्मनिष्ठाबलमेव विवक्षितं न तु शारीरं धनसहायादिजं वेति भावः ॥ के. भा. २-४.

2. 'नायमात्मा ... लभ्यः' इति वा॥ मूलानुपूर्वीमनुसृत्यैव भाष्यं लिख्यत इत्याचार्यशैलीमनुलक्ष्य सोऽपि पाठोऽङ्गीकार्य एव ॥

3. 'विषयसङ्गनिमित्तप्रमादात्' इति वा॥ बाह्यासङ्ग एव ह्यात्मप्रार्थनायाः प्रत्यूहरूपप्रमादकारणम् । अतोऽप्रमत्तेन भाव्यं मुमुक्षुणेति भावः ॥

4. अनुभवपर्यन्तम् ॥

5. संन्यासस्यापि ज्ञानपरिपाकायापेक्षास्तीति भावः । सू. भा. ३-४-२० । द्रष्टव्यात्र भूमिका ॥

6. परोक्षज्ञानवान् साधकः इत्यर्थः ॥

7. ज्ञानेनाविद्यां विधूयैकीभवति परमात्मना इत्यर्थः । गी. भा. १८-५५. आत्मवरणं बलाप्रमादादिसहायमप्यपेक्षते शीघ्रप्राप्त्यायेति तु वाक्यार्थः ॥

**सर्वात्मना ब्रह्मप्राप्तिर्ज्ञानिनः**

कथं ब्रह्म विशते[1] इति ? उच्यते —

संप्राप्य समवगम्य[2] एनम् आत्मानम् ऋषयः दर्शनवन्तः[3] तेनैव ज्ञानेन तृप्ताः न बाह्येन तृप्तिसाधनेन[4] शरीरोपचयकारणेन । कृतात्मानः परमात्मस्वरूपेणैव निष्पन्नात्मानः सन्तः[5] वीतरागाः विगत-रागादिदोषाः प्रशान्ताः उपरतेन्द्रियाः । ते एवंभूताः सर्वगं सर्वव्यापिनम् आकाशवत्[6] सर्वतः सर्वत्र प्राप्य[7] नोपाधिपरिच्छिन्नेन एकदेशेन, किं तर्हि, तद्ब्रह्मैवाद्वयम् आत्मत्वेन प्रतिपद्य धीराः अत्यन्तविवेकिनः[8] युक्तात्मानः नित्यसमाहितस्वभावाः[9] सर्वमेव समस्तं[10] शरीरपातकालेऽपि[11]

---

1. 'संविशते' इति आ॥ ; संविरहित एव तु पाठो युक्ततरः । 'विशते ब्रह्मधाम' इत्यनेन संवादार्थम् ॥

2. 'संप्राप्य' इत्यत्र समित्युपसर्गस्य सम्यक्त्वमर्थः । प्राप्तिस्तु अवगति-रेव, इतरस्याः गतिपूर्विकायाः परे ब्रह्मण्यसंभवात् इति भावः ॥ सू. भा. ४-३-७.

3. साक्षादहमस्मीत्येवं दृष्टवन्तः ॥ 4. तै.भा. २-७ (रसशब्दभाष्यम् )॥

5. अविद्याकल्पितात्मस्वरूपापनयनेन स्वेन नित्यसिद्धेन पररूपेण निष्पादितात्मानः ॥ ३-२-२.

6. 'आकाशवत्सर्वगतश्च नित्यः' इति श्रुतिसूचनमिदम् ॥

7. अविद्यादशायामेकदेशेन देहादिपरिच्छिन्नेन ब्रह्मप्राप्तिः । ज्ञानदशायां पुनः सर्वतः प्राप्तिः । न हि सर्वगतस्य स्वात्मत्वेनावगतस्य एकदेशेन प्राप्तिः, एकदेशेनाप्राप्तिश्चेत्युपपद्यते इति भावः । प्राप्तिश्चात्र प्रतिपत्तिरवगतिरेव ॥ सू. भा. १-१-४.

8. यद्यपि देहातिरिक्ताहंप्रत्ययगम्यमात्मानं प्रतिपन्ना अपि विवेकिन एव, तथापि अद्वयात्मानं प्रतिपन्नास्ततोऽपि विवेकिनः । न चैष विवेकः सातिशय इति अत्यन्तविवेकिनस्ते ॥

9. कूटस्थं हि ब्रह्म नित्यसमाहितम् । सर्वथापि विक्षेपराहित्यात् (गौ. का. ३-३७)। अत एव तदात्मत्वमापन्ना ज्ञानिनोऽपि नित्ययुक्ताः । न त्वितर-योगिन इव प्रयत्नसिद्धसमाधिकाले एव युक्ताः ॥

10. ब्रह्म हि सर्वम् । ज्ञानेन तद्भावमापन्ना जीवन्त एव, तदूर्ध्वमपि तदा विशन्ति ॥ प्र. ४-११, बृ. १-४-१०.

11. यद्यपि ज्ञानिदृष्ट्या नित्यमेवाशरीरत्वम् (सू. भा. १-१-४), तथापि व्यावहारिकदृष्ट्या शरीरपातकालेऽपीत्युक्तम् आविशन्तीति च ॥

आविशन्ति । भिन्ने घटे घटाकाशवत् अविद्याकृतोपाधिपरिच्छेदं जहति[1] । एवं ब्रह्मविदो ब्रह्मधाम प्रविशन्ति[2] ॥ ५ ॥

**वेदान्तविज्ञानसुनिश्चितार्थाः**
**संन्यासयोगाद्यतयः शुद्धसत्त्वाः ।**
**ते ब्रह्मलोकेषु परान्तकाले**
**परामृताः परिमुच्यन्ति सर्वे ॥ ६ ॥**

**ज्ञानिनां न गतिपूर्विका ब्रह्मप्राप्तिः**

८०. किञ्च- वेदान्तजनितं विज्ञानं वेदान्तविज्ञानं, तस्यार्थः परमात्मा[3] विज्ञेयः । सोऽर्थः सुनिश्चितः येषां ते वेदान्तविज्ञानसुनिश्चितार्थाः[4] । ते च संन्यासयोगात् सर्वकर्मपरित्यागलक्षणयोगात् । केवलब्रह्मनिष्ठास्वरूपात्[5] योगात् । यतयः यतनशीलाः । शुद्धसत्त्वाः शुद्धं सत्त्वं येषां संन्यासयोगात् ते शुद्धसत्त्वाः । ते ब्रह्मलोकेषु । संसारिणां ये मरणकालाः ते अपरान्ताः[6] । तान् अपेक्ष्य मुमुक्षूणां

1. नित्यं महाकाशेनाभिन्न एव घटाकाशः, अविद्याकल्पितोपाधिपरिच्छेदात् भिन्न इव तन्नाशान्महाकाशं प्रविष्ट इव च ॥ गौ. का. भा. ३-२, ४.

2. एवमौपचारिक एव प्रवेशः, न तु मुख्यवृत्त्या ॥ बृ. भा. ४-४-६ (ब्रह्मैव सन्ब्रह्माप्येति).

3. 'पर आत्मा' इति वा॥

4. 'सुनिश्चितवेदान्तविज्ञानार्थाः' इति संबन्ध इति भावः । संशयविपर्ययरहितत्वं सुनिश्चितत्वम् । एतादृशसुनिश्चयप्रदत्वमेव वेदान्तविज्ञानस्य विज्ञानत्वम्, अनुभवपर्यन्तविशेषज्ञानत्वम् ॥

5. सर्वकर्मसंन्यासपूर्विका ब्रह्मनिष्ठैवात्र संन्यासयोगशब्दवाच्या । गी. भा. १८-४९ ('नैष्कर्म्यसिद्धिम्' इत्यस्य व्याख्या)॥

6. 'परान्ताः' (आ॥) इति पाठे लेखकप्रमादात्त्रुटित अकारः । यद्यपि मरणकालं परान्तकालत्वेनैव विभावयति लोकः, तथापि न स देहग्रहणस्य परमोऽन्तः । जन्मान्तरे देहग्रहणस्यावश्यम्भावात् ॥

संसारावसाने देहपरित्यागकालः परान्तकालः[1] । तस्मिन् परान्तकाले । साधकानां बहुत्वात् ब्रह्मैव लोकः । एकोऽपि अनेकवत् दृश्यते प्राप्यते वा । अतो बहुवचनं ब्रह्मलोकेषु इति । ब्रह्मणि इत्यर्थः[2] । परामृताः परम् अमृतम् अमरणधर्मकं ब्रह्म[3] आत्मभूतं येषां ते परामृताः । जीवन्त एव ब्रह्मभूताः[4] परामृताः सन्तः परि समन्तात् प्रदीपनिर्वाणवत्[5] भिन्न-घटाकाशवच्च[6] निवृत्तिम्[7] उपयान्ति । परिमुच्यन्ति । परि समन्तात् मुच्यन्ते[8] सर्वे । न देशान्तरं गन्तव्यम् अपेक्षन्ते । 'शकुनीनामिवाकाशे जले वारिचरस्य च[9] । पदं यथा न दृश्येत तथा ज्ञानवतां

---

1. संसारिमरणकालापेक्षया मुमुक्षूणां मरणकालः परान्तकालः । ज्ञानि-दृष्ट्या तु सर्वदा तस्याशरीरत्वमेवेति नैवास्त्यन्तकालः ॥

2. 'एकोऽपि' इत्यत आरभ्य 'ब्रह्मणि इत्यर्थः' इतियावत् व्युत्क्रमेण पठितं लेखकप्रमादादिति भाति । 'ते ब्रह्मलोकेषु' इत्यस्यानन्तरं तु भाव्यमनेन । 'प्राप्यते च' इति वास्थाने चशब्दपाठो वा ॥ क्रममुक्तितो वा सद्योमुक्तितो वा अभिनवमेव प्रतिपुरुषं प्राप्यते दृश्यते चेति बहुवचनम् । स्वस्वेष्टदेवतारूपेणापि ब्रह्मैव साधकाः समर्चयन्ति चेत्यतोऽपि बहुवचनम् (गी. भा. ७-२१, २२, २३.)। ब्रह्मैव लोक इत्यवधारणं तु ब्रह्मलोकफलानां तदन्तर्गतत्वद्योतनाय । बृ. ४-४-२२.

3. इतरामृतमपरम् अपेक्ष्य परममृतं ब्रह्म ॥

4. परामृतम् आत्मभूतमेषामिति परामृताः । जीवन्त एव ब्रह्मभूताः सन्त इत्यर्थः ॥ बृ. ४-४-६ (ब्रह्मैव सन्)

5. यथा प्रदीपस्य निर्वाणे इहैव तेजःसामान्ये अभ्यक्तेऽवस्थितिः तद्वत् । का. भा. २-३-१४.

6. भिन्ने घटे अविद्याकृतभेदव्यवहारं परित्यज्य महाकाशाविशेषेणाव-स्थितिवत् इत्यर्थः । भिन्नपदरहितं 'घटाकाशवच्च' इत्येतावत् भा॥ अपेक्षितं तु भिन्नपदम् ॥

7. 'निर्वृतिम्' इत्येतत् लेखकैरित्थं परिवर्तितं भाति ॥

8. 'परि समन्तात्' इति द्विः किं पठितमिति न ज्ञायते । लेखक-प्रमादोऽयमित्युन्नीयते । 'भिन्नघटाकाशवच्च मुच्यन्ति मुच्यन्ते निवृत्तिम् (निर्वृतिम्) उपयान्ति' इति हि भगवतः शैलीमनुरुध्य वाक्यमत्र पठितुम् ॥

9. 'जले वारिचरस्य च' इत्यस्य स्थाने 'मत्स्यानामिव चोदके' इति मुद्रितभारतपुस्तके । 'वारिचरस्य वा' इति वा ॥

गतिः ॥ ’ (मो. ध. १८१-९), ‘अनध्वगा अध्वसु पारयिष्णवः’ (?) इति श्रुतिस्मृतिभ्याम्[1] ॥

देशपरिच्छिन्ना हि गतिः संसारविषयैव । परिच्छिन्नसाधनसाध्यत्वात् । ब्रह्म तु समस्तत्वान्न देशपरिच्छेदेन गन्तव्यम् । यदि हि देशपरिच्छिन्नं ब्रह्म स्यात्, मूर्तद्रव्यवत् आद्यन्तवत् अन्याश्रितं सावयवम् अनित्यं कृतकं च स्यात् । न त्वेवंविधं भवितुमर्हति । अतस्तत्प्राप्तिश्च नैव देशपरिच्छिन्ना भवितुं युक्ता[2] । अपि च अविद्यादिसंसारबन्धापनयनमेव मोक्षमिच्छन्ति ब्रह्मविदो न तु कार्यभूतम्[3] ॥ ६ ॥

**गताः कलाः पञ्चदश प्रतिष्ठा**
**देवाश्च सर्वे प्रतिदेवतासु ।**
**कर्माणि विज्ञानमयश्च आत्मा**
**परेऽव्यये सर्व एकीभवन्ति ॥ ७ ॥**

### विज्ञानात्मनः सकर्मणः परमात्मन्येकीभावः

८१. किं च मोक्षकाले या देहारम्भिकाः कलाः प्राणाद्याः ताः स्वाः प्रतिष्ठाः[4] गताः । स्वं स्वं कारणं गता भवन्ति इत्यर्थः[5] ।

1. स्मृतिश्रुतिभ्याम् इति व्युत्क्रमेण संबन्धो बोधनीयः । ‘अनध्वगा’ इति श्रुतिः काठकेऽपि (१-३-१२) उदाहृता । कुत्रत्येति तु न विज्ञायते । ‘श्रुतिस्मृतिभ्यः’ इति (आ॥)पाठस्तु ‘इत्यादिश्रुतिस्मृतिभ्यः’ इति चेत्साधुः स्यात् ॥

2. उपासकानामेव तु गतिपूर्विका देशपरिच्छिन्नफलप्राप्तिर्न ज्ञानिनाम्, बृ. भा. ३-२-११; सू. भा. ४-३-७, ८; छां. भा. ४-३-१५.

3. ‘न च निगडभङ्ग इवाभावभूतो मोक्षः’, ‘अविद्यानिवृत्तिमात्रे मोक्षव्यवहारः’ इति च (बृ. भा. ४-४-६) वाक्यद्वयमत्रानुसन्धेयम् ॥

4. ‘स्वाः’ इत्यधिकमिति भाति ॥ ‘स्वां स्वां प्रतिष्ठाम्’ इति आ॥ पाठस्तु मूलानुगुण एव ॥

5. पाञ्चभौतिकाः कलाः पृथिव्यादीरेव स्वप्रकृतीरपिगच्छन्तीत्यर्थः । एतच्च व्यवहारापेक्षया । विद्वद्दृष्ट्या तु सर्वं ब्रह्मैव संपद्यते ॥ प्र. ६-५, सू. भा. ४-२-१५.

प्रतिष्ठाः इति द्वितीयाबहुवचनम् । पञ्चदश पञ्चदशसंख्याकाः या अन्त्यप्रश्नपरिपठिताः[1] प्रसिद्धाः । देवाश्च देहाश्रयाः चक्षुरादिकरणस्थाः[2] सर्वे प्रतिदेवतासु आदित्यादिषु गता भवन्ति इत्यर्थः[3] । यानि च मुमुक्षुणा कृतानि कर्माणि अप्रवृत्तफलानि । प्रवृत्तफलानाम् उपभोगेनैव क्षीयमाणत्वात्[4] । विज्ञानमयश्च आत्मा अविद्याकृतबुद्ध्याद्युपाधिम् आत्मत्वेन गत्वा[5] जलादिषु सूर्यादिप्रतिबिम्बवत् इह प्रविष्टो देहभेदेषु[6] । कर्मणां तत्फलार्थत्वात् सह तेनैव विज्ञानमयेन आत्मना[7] । अतो विज्ञानमयो विज्ञानप्रायः[8] । त एते कर्माणि विज्ञानमयश्च आत्मा उपाध्यपनयने सति परे अव्यये अनन्ते, अक्षये, ब्रह्मणि आकाशकल्पे अजे, अजरे, अमृते, अभये[9], अपूर्वे, अनपरे, अनन्तरे, अबाह्ये[10], अद्वये, शिवे, शान्ते[11], सर्वे एकीभवन्ति अविशेषतां गच्छन्ति एकत्वम्

---

1. कलाः – प्राणः, श्रद्धा, आकाशादिपञ्चकम् – इति सप्त ; इन्द्रियम्, मनः, अन्नम्, वीर्यम्, तपः, मन्त्राः, कर्म, लोकाः, नाम – इत्येता नव (प्र. ६-४) ॥ यद्यपि वस्तुतः सर्वा एव कलाः प्रलीयन्ते, तथापि व्यवहारदृष्ट्या नाम्न आकृतिसंबन्धान्नित्यत्वे सति नाममात्रं न लीयत इत्यभिप्रायेण पञ्चदशेत्युक्तमिति भाति । 'किमेतं न जहातीति नामेति' (बृ ३-२-१२) इति श्रुत्यन्तरात् ॥

2. करणानुग्राहकत्वेन स्थिता देवतांशा इत्यर्थः ॥

3. स्वां स्वामादित्याद्यात्मतां प्रतिपद्यन्ते इत्यर्थः ॥ (बृ. भा. ४-४-१)

4. एतच्चोक्तं प्रागेव ( २-२-९ भाष्ये ) । तत्रत्यटिप्पणं च द्रष्टव्यम् । 'क्षीणत्वात्' वा ॥

5. 'मत्वा' इति आ॥ ; अत्रत्यस्तु वा॥ पाठः ॥

6. प्रतिबिम्बा इव देहभेदेषु बहुत्वेऽपि स्वरूपतः परमात्मैवाद्वितीय इत्यर्थः ॥ प्र. भा. ४-९, सू. भा. २-३-५०.

7. 'एकीभवन्ति' इत्यनेनान्वयः ॥

8. विज्ञानगुणाभिमानी संसारीत्यर्थः । विज्ञानविकार इति तु नार्थः ॥ सू. भा. २-३-२९, बृ. भा. ४-३-७ । विज्ञायतेऽनेनेत्यन्तःकरणं विज्ञानम् । तन्मयस्तत्प्रायः । तत्प्रायत्वं च तस्मिन् तेन चोपलभ्यत्वम्, उपलब्धृत्वं च ॥ बृ. भा. २-१-१६.

9. बृ. ४-४-२५. 10. बृ. ३-८-८. 11. मां. ७.

आपद्यन्ते[1] । जलाद्याधारापनये इव सूर्यादिप्रतिबिम्बाः सूर्ये, घटाद्यपनये इव आकाशे घटाद्याकाशाः[2] ॥ ७ ॥

**यथा नद्यः स्यन्दमाना समुद्रेऽ**
**स्तं गच्छन्ति नामरूपे विहाय ।**
**तथा विद्वान् नामरूपाद्विमुक्तः**
**परात्परं पुरुषमुपैति दिव्यम् ॥ ८ ॥**

**नामरूपाभ्यां विमुक्तिः –**

८२. किञ्च यथा नद्यः गङ्गाद्याः स्यन्दमानाः गच्छन्त्यः समुद्रे समुद्रं प्राप्य अस्तम् अदर्शनम् अविशेषात्मभावम्[3] गच्छन्ति प्राप्नुवन्ति नाम च रूपं च नामरूपे विहाय हित्वा तथा अविद्याकृतनामरूपात्[4] विमुक्तः सन् विद्वान् परात् अक्षरात् पूर्वोक्तात्[5] परं दिव्यं पुरुषं यथोक्तलक्षणम्[6] उपैति उपगच्छति[7] ॥ ८ ॥

---

1. निरवशेषेण प्रलीयन्ते इत्यर्थः ॥ सू. भा. ४-२-१६.

2. अत्रत्यदृष्टान्तद्वयमवष्टभ्य उपाधिप्रतिबिम्बभूत एव जीव इति, उपाध्यवच्छिन्न एव सः – इति च पक्षद्वयं परिकल्प्य व्याख्यानप्रास्थानिकाः परस्परं विवदन्ते स्म । पक्षद्वयमप्याचार्यानभिमतमित्यस्मदीय 'माण्डूक्यरहस्यविवृतौ' प्रतिपादितम् ॥

3. समुद्रात्मभावं गच्छन्तीत्यर्थः ; न पुनर्नाशं गच्छन्तीति । दृष्टविरोधात् ॥

4. नामरूपे जीवाश्रयेऽपि विद्येते इति पक्षनिरसनार्थम् अविद्याकृतेति । उपाध्याश्रयं नामरूपं जीव उपचर्यते । उपाध्याश्रयमपि न वास्तवम्, उपाधेरप्यविद्याकल्पितत्वादिति भावः ॥ सू. भा. १-४-२२.

5. अव्याकृतात्, 'अक्षरात्परतः परः' (२-१-२) इत्यत्र वर्णितात् इत्यर्थः ॥

6. 'यत्तदद्रेश्यम्' इत्याद्युक्तलक्षणम्, 'बृहच्च तद्दिव्यम्' इत्याद्युक्तलक्षणं च ॥

7. तमैक्याभयमीत्यर्थः । जीवन्नेव तदात्मत्वं गतो नामरूपप्रहाणेनापि मेतव प्रतिपद्यते । न पुनर्नामरूपकृतशरीरं गृह्णातीत्यभिप्रायः ॥

**स यो ह वै तत्परमं ब्रह्म वेद**
**ब्रह्मैव भवति नास्याब्रह्मवित्कुले भवति ।**
**तरति शोकं तरति पाप्मानं**
**गुहाग्रन्थिभ्यो विमुक्तोऽमृतो भवति ॥ ९ ॥**

**ब्रह्मविद् ब्रह्मैव भवति**

८३. ननु श्रेयसि अनेके विघ्नाः प्रसिद्धाः । अतः क्लेशानामन्यतमेन[1] अन्येन वा देवादिना[2] विघ्नितो ब्रह्मविदपि अन्यां गतिं मृतो गच्छति न ब्रह्मैव । न । **विद्ययैव सर्वप्रतिबन्धस्य अपनीतत्वात् । अविद्याप्रतिबन्धमात्रो हि मोक्षो नान्यप्रतिबन्धः** । नित्यत्वात्, आत्मभूतत्वाच्च[3] ॥

तस्मात् स यः कश्चित्[4] ह वै लोके तत् परमं ब्रह्म वेद साक्षात् अहमेवास्मीति जानाति स नान्यां गतिं गच्छति । देवैरपि तस्य ब्रह्मप्राप्तिं प्रति विघ्नो न शक्यते कर्तुम् । आत्मा ह्येषां स भवति[5] । तस्मात् ब्रह्म विद्वान् ब्रह्मैव भवति । किञ्च, नास्य विदुषः अब्रह्मवित् कुले भवति[6] । किञ्च, तरति शोकं अनेकेष्टवैकल्यनिमित्तं मानसं सन्तापं जीवन्नेव अतिक्रान्तो भवति[7] । तरति पाप्मानं धर्माधर्माख्यम्[8] । गुहाग्रन्थिभ्यः

---

1. अविद्यारागद्वेषभयमोहादयः (सू. भा. १-३-२), अविद्यास्मितारागद्वेषाभिनिवेशाख्यास्तन्त्रान्तरप्रसिद्धा वा (यो. सू. २-३) ॥

2. 'देवादिना च' इति मुद्रितपुस्तकपाठे चोऽधिकः ॥

3. ब्रह्मैव ह्यात्मभूता मुक्त्यवस्था ॥ सू. भा. ४-१-५२.

4. देवो वा, ऋषिर्वा, मनुष्यो वा ॥ बृ. १-४-१०.

5. बृ. १-४-१०.

6. ब्रह्मजिज्ञासव एव तस्य कुले भवन्तीति ज्ञानस्तुतये । योगिभ्रष्टो ज्ञानिनां कुले जायत इति गीतोक्ति(६-४२)रत्रानुसन्धेया ॥

7. छां. ७-१-३, ई. ७.

8. धर्मोऽपि पापशब्दवाच्यः । सू. भा. ४-१-१४, छां. भा. ८-१-५.

हृदयाविद्याग्रन्थिभ्यः[1] विमुक्तः सन् अमृतो भवति इति उक्तमेव[2] 'भिद्यते हृदयग्रन्थिः' (२-२-९) इत्यादि ॥ ९ ॥

## उपसंहारः

**तदेतदृचाभ्युक्तम्-**
**क्रियावन्तः श्रोत्रिया ब्रह्मनिष्ठाः**
**स्वयं जुह्वत एकर्षिं श्रद्धयन्तः ।**
**तेषामेवैतां ब्रह्मविद्यां वदेत**
**शिरोव्रतं विधिवद्यैस्तु चीर्णम् ॥ १० ॥**

### विद्यासंप्रदानविधिः

८४. अथेदानीं ब्रह्मविद्यासंप्रदानविध्युपप्रदर्शनेन[3] उपसंहारः क्रियते --

तदेतत् विद्यासंप्रदानविधानम्[4] ऋचा मन्त्रेण अभ्युक्तम् अभिप्रकाशितम् क्रियावन्तः यथोक्तकर्मानुष्ठानयुक्ताः[5] श्रोत्रियाः ब्रह्मनिष्ठाः अपरस्मिन् ब्रह्मणि अभियुक्ताः[6] परं[7] ब्रह्म बुभुत्सवः[8] स्वयम् एकर्षिम्

1. अविद्यावासनाप्रचिताः कामादयो ग्रन्थिवद् दृढीभूताः ॥
2. पुनरपीहोच्यते उपसंहारे ॥
3. सम्यक्प्रदानम् यथैव ज्ञानं कार्यक्षमं स्यात् । तस्य विधिः प्रकारः ॥
4. एतच्छब्देन प्रकृतग्रन्थद्वारेण विद्यासंप्रदानं विवक्षितमिति भावः । संप्रदानविधानस्यैव बुद्धौ संनिहितत्वात् ॥
5. विद्यासंप्रदानप्रकरणत्वात् 'क्रियावन्तः' इत्येतत्कर्मानुष्ठानेन संस्कारवतां परामर्शात्मकमिति गम्यत इति भावः ॥
6. तस्मिन् समाहितचित्ताः ॥ 7. 'परब्रह्म' इति आ॥
8. एतदर्थमभ्यस्तं । अबुभुत्सूनामनधिकारात् । प्र. १-१ ॥

एकर्षिनामानमग्निं जुह्वते जुह्वति श्रद्धयन्तः श्रद्दधानाः सन्तः, ये तेषामेव संस्कृतात्मनां[1] पात्रभूतानाम् एतां ब्रह्मविद्यां वदेत ब्रूयात् शिरोव्रतं शिरसि अग्निधारणलक्षणम् यथा आथर्वणानां वेदव्रतं प्रसिद्धम्[2] । यैस्तु यैश्च तत् चीर्णं विधिवत् यथाविधानं तेषामेव च वदेत[3] ॥ १० ॥

**तदेतत्सत्यमृषिरङ्गिराः पुरोवाच नैतद-चीर्णव्रतोऽधीते । नमः परमऋषिभ्यो नमः परमऋषिभ्यः ॥ ११ ॥**

८५. तदेतत् अक्षरं पुरुषं सत्यम्[4] ऋषिः अङ्गिराः नाम पुरा पूर्वं शौनकाय विधिवत् उपसन्नाय पृष्टवते उवाच । तद्वत् अन्योऽपि तथैव श्रेयोऽर्थिने मुमुक्षवे मोक्षार्थं विधिवत् उपसन्नाय ब्रूयात् इत्यर्थः[5] । नैतत् ग्रन्थरूपम् अचीर्णव्रतः अचरितव्रतोपि अधीते न पठति । चीर्ण-व्रतस्य हि विद्या फलाय संस्कृता भवति इति[6] ॥

समाप्ता ब्रह्मविद्या । सा येभ्यो ब्रह्मादिभ्यः पारम्पर्यक्रमेण संप्राप्ता तेभ्यो नमः परमऋषिभ्यः । परमं ब्रह्म साक्षात् दृष्टवन्तो ये

1. न त्वसंस्कृतचित्तानाम् ॥

2. स्वाध्यायस्यैष धर्मो न विद्याया इति निर्णीतं सूत्रकारेण (३-३-३) । तेन 'एतां ब्रह्मविद्याम्' इति ग्रन्थविशेषसंयोगित्वेनैव व्याख्येयमिति भावः ॥

3. चशब्दो नास्ति घा॥ ; 'वदेत' इति नास्ति भा॥

4. परमोपसंहारत्वात् 'तदेतत्' इति सकलोपनिषदर्थभूतमक्षरमेव परामृष्टमिति गम्यते ॥

5. 'विधिवदुपसन्नः पप्रच्छ' (१-१-२) इत्येत्पुनरपि परामृष्टं विधि-वदुपसन्नायाधिकारिणे विद्या संप्रदातव्या नापृच्छतेऽन्यायेन पृच्छते वेति ज्ञाप-नार्थम् । अत एव मूले 'ऋषिरङ्गिराः पुरोवाच' इति कथनम् ॥

6. संस्कारवद्धि वेदाध्ययनम् आत्मविद्याफलमादधाति । अथवा विधिव-दधीत्य वेदवाक्यविचारपूर्वकमधिगतैव विद्या फलपर्यन्ता भवतीत्यर्थः ॥

ब्रह्मादयः अवगतवन्तः ते परमर्षयः[1] । तेभ्यो भूयोऽपि नमः । द्विर्वचनम् अत्यादरार्थं, मुण्डकसमाप्त्यर्थं च ॥ ११ ॥

**इत्याथर्वणमुण्डकोपनिषद्भाष्ये तृतीयमुण्डके द्वितीयः खण्डः**

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य श्रीमच्छङ्करभगवतः कृतौ आथर्वणमुण्डकोपनिषद्भाष्यं समाप्तम्

1. तत्त्वदर्शित्वादेव तेभ्यः प्राप्ता विद्या मोहविनाशिनीति भावः ॥ गी. भा. ४-३४, ३५.

# अथ मुण्डकोपनिषत्सारः

**अत्रत्यसंख्या उपनिषन्मन्त्रपरामर्शिकाः**

## प्रथममुण्डके – प्रथमः खण्डः

१–२. आदौ ब्रह्मविद्यासंप्रदायकर्ता देवानां प्रथमजः सर्वजगत्सृष्टिस्थितिकर्ता हिरण्यगर्भो ब्रह्मा । तस्मादथर्वा ब्रह्मविद्यामधिजगाम । ततोऽङ्गीः, ततो भारद्वाजः, ततश्चाङ्गिराः – इत्येवं ब्रह्मविद्यागुरुपर्वक्रमः ॥

३. शौनको नाम महागृहस्थः, ऋषिमङ्गिरसं विधिवदुपसन्नः 'भगवन्, कस्मिन्नेकस्मिन्विज्ञाते सर्वमिदं विज्ञातं भवति ?' इति पप्रच्छ ॥

४–९. स चाङ्गिरास्तं प्रत्युवाच । अत्र द्वे विद्ये विविच्य वेदितव्ये । तत्र ऋग्वेदादिशब्दराशिरूपा **अपरा विद्या** कर्मोपासनाविधायिनी । यया तु तदक्षरमधिगम्यते सा **परा विद्या**। तत्तु अक्षरमतीन्द्रियम्, अकारणम्, अकार्यकरणम्, नित्यं, विभु, सर्वगतं, सुसूक्ष्मम्, अव्ययं, सर्वभूतयोनिः, सर्वज्ञस्वरूपम् । तस्माच्चाक्षरात् सूत्रमिवोर्णनाभेः, ओषधय इव पृथिव्याः, केशलोमानीव च पुरुषात् विलक्षणं विचित्रं जगदुत्पन्नम् । तस्मादेवादौ जगद्बीजमव्याकृतं व्याचिकीर्षितावस्थारूपत्वमापद्यते । ततः प्राणो मनः कर्म लोकाश्च – इत्येतत्सर्वं क्रमेण जायते । तदीदृशाक्षरसमधिगमनी **परा विद्या** ॥

## प्रथममुण्डके – द्वितीयः खण्डः

१–१०. तत्रापरविद्यायाः संसारः फलम् । यद्यपि अग्निहोत्रादि कर्म एकान्तेन पुरुषार्थसाधकम्; तथापि तस्य सम्यक्करणं दुःशकम्, तत्र विघ्नाश्च बहवः । सम्यगाचरितेन च तेन यः स्वर्गोऽवाप्यते सोऽनित्यः । अतः कर्मफलमेव परमं श्रेय इति ये मन्यन्ते परानप्येवं बोधयन्ति, ते मूढाः । अविद्यातिमिरान्धाः स्वसमानचित्तभूमिभिस्तैरेवान्धैर्नीयन्ते कर्ममार्गे । कर्मफलभूतस्वर्गानुभवानन्तरं ते पुनरपि मानुषं लोकं वा ततोऽपि हीनतरं तिर्यङ्नरकादिलक्षणां वा यथाकर्मशेषमागच्छन्ति ॥

११. केचित्तु वानप्रस्थाश्रमं त्रिदण्डिसंन्यासाश्रमं वा प्राप्ताः स्वाश्रमोचितकर्मसहितं हिरण्यगर्भोपासनामनुतिष्ठन्ति । यत्सत्यं तेषां केवलकर्मिभ्योऽधिकतरं फलं भवतीति । यतस्ते दीर्घकालस्थायि ब्रह्मलोकमेव प्राप्नुवन्ति । तदपि तु फलं संसारान्तर्गतमेव कृतकमनित्यं च । एतदन्ता अपरविद्या लभ्या गतिः ॥

१२. यस्तु विवेकी एतान्सर्वान् लोकान् कर्मोपासनासाध्यान् कृतकत्वादनित्यान् निश्चित्य ततो निर्विण्णः, स तु नित्यस्य पुरुषार्थस्य विजिज्ञासया श्रोत्रियं ब्रह्मनिष्ठं गुरुमेव विधिवदभिगच्छति । तस्मै च शमादिसाधनसंपद्युक्तायाधिकारिणे स आचार्यो ब्रह्मविद्यां नाम परां विद्यामुपदिशति । तेनैव च सद्गुरूपदेशेन अक्षराख्यं सत्यं पुरुषं स यथावज्जानाति ॥

## द्वितीयमुण्डके – प्रथमः खण्डः

१–३. तदेतदक्षरं परविद्याधिगम्यं परमार्थसत्यम् । अपरविद्याफलं तु ब्रह्मलोकान्तमप्येतदपेक्ष्य अनृतमेव । यत्कारणम् एषोऽक्षराख्यः परमपुरुषः सबाह्याभ्यन्तरो ह्यजः अप्राणोऽमनाः शुद्धश्च, यतोऽयमव्याकृताख्यादक्षरात्सकलजगद्बीजभूतादपि परो निरुपाधिको निर्विशेषश्च । एतस्मादेवाप्राणादिरूपात् प्राणाद्यनृतं जगज्जायते मायया ॥

४–१०. प्रथमजात्प्राणात् हिरण्यगर्भाख्यात् जायमान इव यो लक्ष्यते विराट्, सोऽप्येतस्मादेव जायते । पञ्चाग्निद्वारेण संसरन्त्यः प्रजाः, तेषां कर्माङ्गभूता वेदाः, कर्माणि, कर्मसाधनानि, तत्फलानि, देवा मनुष्यपशुपक्ष्यादयः, तपः, अध्यात्मप्राणः, श्रद्धादिभावाः, इन्द्रियाणि तद्विषयाश्च समुद्राः, पर्वताः, नद्य ओषधयश्च इत्येतत्सर्वम् एतस्मादेव पुरुषात् प्रसूयते । अत एव विकारत्वात् सर्वमेतदनृतम्; पुरुष इत्येव सत्यम् । तदेवं कर्म, उपासना, तत्फलं चेत्येतत्सर्वं पुरुष एव परमार्थतः । तदेतदेव ब्रह्माहमिति यो विजानाति स सर्वज्ञोऽविद्याग्रन्थिं जीवन्नेव भेत्तुं शक्नोति ॥

## द्वितीयमुण्डके – द्वितीयः खण्डः

१-८. सर्वस्य हृदये सन्निहितेऽस्मिन्नक्षरे सर्वं समर्पितमित्यतो 'गुहाचरम्' इति नाम्ना प्रसिद्धमेतत् । तदेतदलौकिकविज्ञानागोचरं साधकेन स्वात्मत्वेनावगन्तव्यम् । उपनिषत्प्रसिद्धं प्रणवाख्यं धनुर्गृहीत्वा बाह्यविषयाननुसन्धानपूर्वकम् आत्मानं शरम् उपासनया संस्कृत्य, ब्रह्म च लक्ष्यं कृत्वा तस्मिन्नेव समाहितमनसा तद्वेद्धव्यम् । ततः शरवत्तन्मयो भवेत् । भावकैर्धीरैः अपरविद्यां तत्प्रकाश्यं च सर्वं ससाधनं परित्यज्य बाह्याध्यात्मिकसर्वं जगदात्मवद्भूतः स्वहृदये एव स्थित एषोऽक्षराख्यः सर्वज्ञः सर्ववित्पुरुष आनन्दरूपोऽमृतः शास्त्राचार्योपदेशमनुसृत्य एकाग्रचिन्तनेन विज्ञातव्यः ॥

९-११. एतस्मिन् परावरे विज्ञाते अविद्यायाः सर्वथा अपगमात्, हृदयग्रन्थिः कामो भिद्यते, सर्वसंशयाश्छिद्यन्ते, कर्माणि च क्षीयन्ते । तदेतज्ज्योतिषां ज्योतिर्ब्रह्म आत्मप्रत्ययानुसारिभिरेव स्वहृदये स्वात्मत्वेन वेद्यं भवति । न तु तत् केनापि करणेन विषयीक्रियते । तेनैव हि चैतन्यज्योतिषा व्याप्तानि करणानि स्वं स्वं विषयमवभासयन्ति, सूर्यादयोऽप्यन्यमेवं प्रकाशयितुं प्रभवन्ति ॥

१२. एतावता निरूपणेनेदमेकं सुनिष्पन्नं यत् तदेतद्ब्रह्मैव अक्षरपुरुषसत्यापराभिधानं वस्तुतो यदेतत्सर्वतो दृश्यमानं जगत् । अब्रह्मप्रत्ययः सर्वोऽविद्यामात्रः, ब्रह्मैवैकं परमार्थसत्यमिति ॥

## तृतीयमुण्डके – प्रथमः खण्डः

१–४. एकस्मिन्नेव शरीरे लिङ्गोपाधिकोऽज्ञो जीव एकः, तत्साक्षी सर्वसत्त्वोपाधिकः सर्वज्ञः परमेश्वरश्चान्यः इति द्वावात्मानौ समानवृक्षाश्रितपक्षिद्वयवत्तिष्ठतः । तयोर्जीवः कर्ता भोक्ता च ; ईश्वरस्तु केवलं द्रष्टैव, स्वसांनिध्यमात्रेण सर्वस्य प्रेरयिता च । यदा त्वयं जीवः सुकृतवशात् परमेश्वरममुम् आचार्यदर्शितयोगमार्गेण संसेव्य स एवाहमस्म्यसंसारी सर्वस्याऽऽत्मा, ममैव चायं सकलजगद्रूपो महिमा इति विजानाति, तदैव वीतशोकः पुण्यपापातीतस्तेनेश्वरेणाद्वयलक्षणं परमं साम्यमुपैति । अयमहमस्मि प्राणस्यापि प्राणो यो ब्रह्मादिसकलभूतरूपेण विभातीति विजानन् स्वस्मादन्यन्नैव पश्यति । य ईदृशो ब्रह्मवित् स सर्वथा त्यक्त्वा वाह्यैषणाम् आत्मरतिरात्मक्रीडः सदा आत्मनिष्ठैकक्रियश्च भवति ॥

५–९. तस्यास्य सम्यग्ज्ञानस्य सत्यवदनम्, मनइन्द्रियैकाग्र्यरूपं तपः, ब्रह्मचर्यं चेतीमानि साधनानि । एतैः साधनैर्युक्तो यथावर्णितं सूक्ष्मादपि सूक्ष्मतरं बृहतोऽपि बृहत्तरं ब्रह्म सर्वकरणागोचरं चित्ते सर्वमलवियुक्ते ज्ञानप्रसादेन ध्यानबलात्स्वात्मत्वेन अत्यन्तसंनिकृष्टं स्वहृदय एव पश्यति ॥

१०. एवं सर्वात्मानमेतं परमात्मानमात्मत्वेन प्रतिपन्नो विद्वान् सर्वात्मत्वादेव सत्यकामः सत्यसंकल्पश्च भवत्यवाप्तसर्वकामः । तस्माद्विभूतिकामा जनास्तं श्रद्धाभक्तिपुरःसरमर्चयेयुः ॥

## तृतीयमुण्डके – द्वितीयः खण्डः

१–२. ये त्वेनमात्मदर्शिनं निष्कामाः सेवन्ते तेऽस्मात्संसारात् परिमुच्यन्ते । अतो मुमुक्षूणां कामत्यागः प्रधानं साधनम् ॥

३–४. मुख्यतस्तु परमात्मप्राप्तिप्रार्थनैव सर्वमन्यत्परित्यज्य कार्या मुमुक्षुभिः । यत्कारणमनन्यभक्त्या परमात्मवरणैकनिष्ठानेव परमात्मा स्वरूपज्ञानेनानुगृह्णाति । प्रवचनमेधाबहुश्रुतादयस्तु उपाया अध्यात्मवरणहीनस्य न कार्यक्षमाः । आत्मनिष्ठाबलम्, अप्रमादः, तपश्च—इत्येतानि संन्याससहितानि एतस्य आत्मप्रार्थनायाः सहायभूतानि साधनानि भवन्ति ॥

५–६. य एतद्ब्रह्म प्राप्ताः, ते ज्ञानेनतृप्ता वीतरागाः प्रशान्ताश्च भवन्ति । जीवन्त एव सर्वगतब्रह्मरूपेण स्थिताः शरीरपाते सर्वात्मकब्रह्मण्यैकीभवन्ति, न पुनः शरीरान्तरं गृह्णन्ति । वेदान्तार्थविज्ञानसुनिश्चयः, संन्यासपूर्वकब्रह्मनिष्ठा च – इत्येतद् द्वयमेषां ब्रह्मभूयकारणं भवति ॥

७-९. मोक्षकाले चैषां देहारम्भिकाः प्राणाद्याः कलाः स्वस्वकारणं गच्छन्ति व्यावहारिकदृष्ट्या। कर्माणि च विज्ञानात्मना सह ब्रह्मण्येकीभवन्ति। अतः परम्, एषाम् उपाधिभूते नामरूपे नावशिष्येते। समुद्रप्रविष्टा समुद्रैकनाम्न्यो नद्य इव ते सर्वे परात्परं पुरुषमेवोपयन्ति। पुरुषमात्रशब्दगोचराश्च भवन्ति। तदेवं ब्रह्मविद्ब्रह्मैव भवति निर्विघ्नम्, शोकं तरति, धर्माधर्मौ तरति, अविद्याहृदयग्रन्थिभ्यो विमुक्तोऽमृत एव भवति। तत्कुले जाता अपि सर्वे ब्रह्मजिज्ञासवो भवन्ति॥

१०-११. तामेतां ब्रह्मविद्यां कर्मोपासनासंस्कृतचित्तानां, परं ब्रह्मैव अन्वेषमाणानां श्रद्दधानानामेव उपदिशेत्। एतां च मुण्डकोपनिषदम् अथर्ववेदविहितवेदव्रतं चीर्णवन्त एवाधीयीरन्निति शम्॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यवरेण्यश्रीपूज्यपादश्रीशङ्करभगवच्चरण-
स्मरणपरिचर्यावाप्तवेदान्तप्रवेशेन श्रीबोधानन्देन्द्रसरस्वतीशिष्य-
श्रीमत्सच्चिदानन्देन्द्रसरस्वत्याख्येन भिक्षुणा प्रणीतम्
उपनिषत्सारसहितं मुण्डकोपनिषद्भाष्यटिप्पणम्

ॐ तत्सत्



# अथ मन्त्राणां वर्णानुक्रमणिका

# अथ भाष्यस्थमुख्यशब्दसूची

☞ अत्र दत्ताः सङ्ख्याः भाष्यखण्डपरामर्शिन्यः ॥

१०००, १४-१०-१९६०. अध्यात्मप्रकाशमुद्रणालयः, होळेनरसीपुरम्

# Adhyatma Prakasha Karyalaya Publications

**१-३. ईशकेनमुण्डकोपनिषदः – सटिप्पणशाङ्करभाष्यसंयुताः**

Shankara's Bhashyas on the Isa, Kena and Mundaka Upanishads. Each of these three books contains a Critical Edition of the Bhashya sub-divided into paragraphs with appropriate Headings, and the Upanishad Text in Devanagari. Useful Foot-notes with References to parallel passages in the other works of the great Acharya, a Summary of the Upanishad, an Index of important words in the Bhashyas, as well as a thought-provoking Introduction.

**४. माण्डूक्यरहस्यविवृतिः**

An open sesame to the Mandukya with Gaudapada's Karikas. Swami Satchidanandendra Saraswathi's New Sanskrit Commentary not only lays bare every esoteric doctrine taught or implied in the Karikas, but also effectively removes all mis-conceptions that have gathered round Gaudapada's teachings.

**५. सुगमा – अध्यासभाष्यस्य नवीनव्याख्या**

A new commentary on Shankara's Introduction to the famous Sutra Bhashya. It's sole object is to represent Shankara's teaching in all its pristine glory.

**६. वेदान्तबालबोधिनी – प्रातःस्मरणस्तोत्रव्याख्या**

A commentary on the well-known Shankara's Pratah-Smarana Stotram in the form of questions and answers. The author, Sri Swami Satchidanandendra Saraswatiji, has spared no pains in making the contents of the book attractive and thought-arresting. The book is useful to scholars of Vedanta no less than to beginners for whom it is primarily intended.

*For a detailed catalogue apply to*

**ADHYATMA PRAKASHA KARYALAYA,**

**HOLENARSIPUR.**

Hassan Dist., Mysore State, Southern Railway.